  

## अयस्मयादीनि छन्दसि ( १-४-२० )

'अयस्मयम्' आदिर्येषां तान्ययस्मयादीनि ( बहु० )। अयस्मयादी शब्दरूपाणि छन्दसि विषये भपदोभयसंज्ञात्वेन साधूनि भवन्ति अयस्मयं वर्म, अयस्मयानि पात्राणि; स सुष्टुभा स ऋक्वता गणेन अयस् शब्दाद् 'द्व्यचश्छन्दसि' ( ४-३-१५० ) इति विकारेऽर्थे विहि मयटि पूर्वस्य 'स्वादिषु०' इति प्राप्ता पदसंज्ञा भसंज्ञया बाध्यते तेन स पदाश्रयं रुत्वं न भवति। ऋगस्यास्तीति ऋच् शब्दाद् विहिते मतु झयः परत्वान् मस्य वत्वे पदसंज्ञाश्रयं 'चोः कुः' ( ८-२-३० ) इति कु भवति, तस्यैव पुनर्भसंज्ञावशात् 'झलां जशोऽन्ते' ( ८-२-३९ ) इ पदनिबन्धनं जश्त्वं च न भवति।

## बहुषु बहुवचनम् ( १-४-२१ )

बहुष्वर्थेषु (=बहुत्वे गम्यमाने ) बहुवचनं ( बहुवचनसञ्ज्ञः प्रत्यय भवति। ब्राह्मणाः पठन्ति। 'ङ्याप्प्रातिपदिकात्' 'स्वौजसमौट्०' ( १-१।२ ) इति स्वादयः, 'लस्य', 'तिप्तस्झि०' ( ३-४-७७।७८ ) इ तिबादयः सामान्येन विहिता, 'तिङस्त्रीणि०' 'तान्येकवचनद्विवचनब वचनान्येकशः', 'सुपः' ( १-४-१०१।१०२।१०३ ) इति सुप्तिङां त्रिका मेकवचनादिसंज्ञा वक्ष्यन्ते। तत्रायं नियमः क्रियते बहुष्वर्थेषु प्रातिप कादधातोर्वा बहुवचनसंज्ञकः प्रत्ययो जसादिर्झ्यादिर्वा भवतीति। 'स पाणामेकशेष०' ( १-२-६४ ) इत्येकशेषश्चात्रोपयुज्यते।

## द्व्येकयोर्द्विवचनैकवचने ( १-४-२२ )

द्व्येकयोः। द्विवचनैकवचने। द्विश्चैकश्च द्व्येकौ तयोः ( इ० द्व० द्विवचनं चैकवचनं च द्विवचनैकवचने ( इ० द्व० )। द्वित्वे द्विव

भवत्येकत्वे एकवचनं। ब्राह्मणौ पचतः। ब्राह्मणः पचति। पूर्ववद् द्वित्वे औ-तसौ, एकत्वे सुतिपौ। एवमन्यत्रापि द्वितीयादिविभक्तौ ग्रोऽयम्।

## कारके ( १-४-२३ ) -५५

यदित ऊर्ध्वमनुक्रमिष्यामस्तत् कारके इत्येवं वेदितव्यम्। विशेषण-मेतदपादानादिसंज्ञाविषयमधिकारश्च।

## ध्रुवमपायेऽपादानम् ( १-४-२४ ) — २१

ध्रुवम्। अपाये। अपादानम्। अपायो विश्लेषो विभागो वा। ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत्कारकमपादानसंज्ञं भवति। ग्रामादागच्छति। पर्वतादवरोहति। सार्थाद्धीनः सार्थात्पतितः। अपाये-साध्ये पर्वतादयो ध्रुवा अवधिभूताश्च, तेषां प्रकृतसूत्रेणापादानसंज्ञायां जातायाम् 'अपादाने पञ्चमी' ( २-३-२८ ) इति पञ्चमीविभक्तिर्भवति।

## भीत्रार्थानां भयहेतुः ( १-४-२५ )

भीत्रार्थानाम्। भयहेतुः। भीतिर्भीः, त्राणं त्राः 'क्विप् च' ( ३-२-७६ ) इति क्विप्प्रत्ययः। भीश्च त्राश्च भीत्रौ तावर्थौ येषां ते भीत्रार्था-स्तेषां ( द्वन्द्वगर्भो बहुव्रीहिः )। भयस्यहेतुः भयहेतुः ( ष० त० )। बिभे-त्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यस्तत्कारकमपादान-संज्ञं भवति। चौरेभ्यो बिभेति, चौरेभ्य उद्विजते। चौरेभ्यस्त्रायते, चौरेभ्यो रक्षति।

## पराजेरसोढः ( १-४-२६ )

पराजेः। असोढः। सोढुं शक्यः सोढो, न सोढोऽसोढः (न० त०)।

  

परापूर्वस्य जिधातोः प्रयोगेऽसोढो योऽर्थस्तत्कारकमपादानसंज्ञं भवति।
अध्ययनात् पराजयते।

## वारणार्थानामीप्सितः ( १-४-२७ )

वारणार्थानाम्। ईप्सितः। वारणमर्थो येषां ते वारणार्थास्तेषां ( बहु० )। वारणार्थानां धातूनां प्रयोगे य ईप्सित आप्तुमिष्टोऽर्थ स्तत्कारकमपादानसंज्ञं भवति। यवेभ्यो गां वारयति, यवेभ्यो गां निवर्त्तयति।

## अन्तर्द्धौ येनादर्शनमिच्छति ( १-४-२८ )

अन्तर्द्धौ। येन। अदर्शनम्। इच्छति। व्यवधानमन्तर्द्धिः। अन्तर्द्धि निमित्तं येनादर्शनमात्मन इच्छति तत्कारकमपादानसंज्ञं भवति। उपा ध्यायादन्तर्धत्ते। उपाध्यायान्निलीयते।

## आख्यातोपयोगे ( १-४-२९ )

आख्याता। उपयोगे। आख्याता प्रतिपादयिता। उपयोगो नियम पूर्वकं विद्याग्रहणम्। उपयोगे साध्ये य आख्याता तत्कारकमपादानसं भवति। उपाध्यायादधीते। उपाध्यायादागमयति।

## जनिकर्त्तुः प्रकृतिः ( १-४-३० )

जनेः कर्त्ता जनिकर्त्ता तस्य (ष० त०)। जन्यर्थस्य जन्मनः कर्त्तुर्जा यमानस्य या प्रकृतिस्तत्कारकमपादानसंज्ञं भवति। शृङ्गाच्छरो जायते गोमयाद् वृश्चिको जायते।

## भुवः प्रभवः ( १-४-३१ )

भवनं भूस्तस्य। प्रभवत्यस्मादिति प्रभवः। भूकर्त्तुः प्रभवस्तत्कार

कमपादानसंज्ञं भवति। हिमवतो गंगा प्रभवति। काश्मीरेभ्यो वितस्ता प्रभवति। तत्र प्रथमत उपलभ्यते इत्यर्थः।

## कर्मणा यमभिप्रैति स सम्प्रदानम् ( १-४-३२ ) -४१

कर्मणा। यम्। अभिप्रैति। स। सम्प्रदानम्। 'कर्त्तुरीप्सिततमं कर्म' ( १-४-४६ ) इति यस्य कर्मसंज्ञां वक्ष्यति तेन करणभूतेन कर्त्ता यमभिप्रैति ( अभिसम्बध्नाति ) तत्कारकं सम्प्रदानसंज्ञं भवति। अन्वर्थसंज्ञासामर्थ्याद् ददातिक्रियायाः कर्मणेति विज्ञायते, सोऽपि देयोऽर्थश्चेत् स्वस्वत्वनिवृत्तिपूर्वके परस्वत्वोत्पादने वर्त्तते। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति। सम्प्रदानसंज्ञायां सत्यां 'चतुर्थी सम्प्रदाने' ( २-३-१३ ) इति चतुर्थीविभक्तिर्भवति।

## रुच्यर्थानां प्रीयमाणः ( १-४-३३ )

रुच्यर्थानाम्। प्रीयमाणः। रुचिना समानार्था रुच्यर्थाः। 'मयूरव्यंसकादयश्च' (२-१-७२) इति समासः-मध्यपदलोपी तत्पुरुषः। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय स्वदतेऽपूपः। यद्यपि रुच् धातुर्दीप्तौ तथापीहाभिलाषे वर्त्ततेऽनेकार्थत्वाद्धातूनाम्। तत्रैव प्रीयमाणार्थस्य सम्भवात्। यस्य ह्यभिलाषः स प्रीयमाणस्तृप्यमाण इत्यर्थः।

## श्लाघ
## श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ( १-४-३४ )

श्लाघह्नुङ्स्थाशपाम्। ज्ञीप्स्यमानः। श्लाघश्च ह्नुङ् च स्था च शप् च श्लाघह्नुङ्स्थाशपः तेषाम् (इ० द्व०)। श्लाघृ (=प्रकत्थने) ह्नुङ् (=अपनयने)-ष्ठा (=गतिनिवृत्तौ)-शप (=आक्रोशे) धातूनां ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति। देवदत्ताय श्ला-

  

घते । देवदत्ताय ह्नुते । देवदत्ताय तिष्ठति । देवदत्ताय शपते । देवद
श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थः ।

## धारेरुत्तमर्णः ( १-४-३५ )

धारेः । उत्तमर्णः । उत्तममृणं यस्य स उत्तमर्णः ( बहु० ) ध
स्वामी । धृञ् (=धारणे ) धातोर्णिजन्तस्य प्रयोगे उत्तमर्णो योऽ
स्तत्कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय शतं धारयति । यज्ञदत्
शतं धारयति । देवदत्तस्य यज्ञदत्तस्य ( षष्ठी शेषे २-३-२० ) इति प्रा
तस्यायं पुरस्तादपवादः ।

## स्पृहेरीप्सितः ( १-४-३६ )

स्पृहेः । ईप्सितः । स्पृह (=ईप्सायां चुरादिरदन्तः ) धातोरीप्सि
योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । पुष्पेभ्यः स्पृहयति । फलेभ्यः स्
हयति । णिचि अतोलोपस्य स्थानिवद्भावाल्लघूपधगुणाऽभावः ।

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( १-४-३७ )

क्रुधद्रुहेर्ष्यासूयार्थानाम् । यम । प्रति । कोपः । क्रुधश्च द्रुहश्च ई
च असूया च क्रुधद्रुहेर्ष्यासूयास्तेषामर्थाः क्रुधद्रुहेर्ष्यासूयार्थास्तेषा
(द्वन्द्वगर्भस्तत्पुरुषः) । अमर्षः=क्रोधः । अपकारो=द्रोहः । अक्षमा=ईर्ष्
गुणेषु दोषाविष्करणमसूया । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपस्तत्का
सम्प्रदानसंज्ञं भवति । देवदत्ताय क्रुध्यति । देवदत्ताय द्रुह्यति । दे
दत्तायेर्ष्यति । देवदत्तायासूयति ।

## क्रुधद्रुहोरुपसृष्टयोः कर्म ( १-४-३८ )

क्रुधद्रुहोः । उपसृष्टयोः । कर्म । क्रुधश्च द्रुह् च क्रुधद्रुहौ

( इ० द्व० )। क्रुधद्रुहोरुपसर्गसम्बद्धयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं भवति। पूर्वेण सम्प्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते। देवदत्त-मभिक्रुध्यति। देवदत्तमभिद्रुह्यति। कर्मकारकविधानात् 'कर्मणि द्वितीया' (२-३-२) इति द्वितीया विभक्तिर्भवति।

## राधीक्ष्योर्यस्य विप्रश्नः ( १-४-३९ )

राधिश्च ईक्षिश्च राधीक्षी तयोः ( इ० द्व० )। राधीक्ष्योः कारकं, यस्य विप्रश्नो विविधः प्रश्नो भवति, तत् सम्प्रदानसंज्ञं भवति। देवदत्ताय राध्यति। देवदत्तायेक्षते। नैमित्तिको दैवज्ञो वा पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः।

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता ( १-४-४० ) -४१

प्रत्याङ्भ्याम्। श्रुवः। पूर्वस्य कर्त्ता। प्रतिश्च आङ् च प्रत्याङौ ताभ्याम् ( इ० द्व० )। प्रति आङ्-पूर्वस्य श्रु (=श्रवणे) धातोः कारकं सम्प्रदानसंज्ञं भवति तच्चेत् पूर्वस्याः क्रियायाः कर्त्ता भवति। देव-दत्ताय गां प्रतिश्रृणोति। देवदत्ताय गामाश्रृणोति। प्रतिजानीत इत्यर्थः। देवदत्तः पूर्वं गां याचते स एव सम्प्रदानकारकं भवति यदाऽन्यस्तस्मै गां दातुं प्रतिजानीते।

## अनुप्रतिगृणश्च ( १-४-४१ )

अनुप्रतिगृणः। च। अनुपूर्वस्य च 'गॄ' (=शब्दे, क्र्यादिः) धातोः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं सम्प्रदानसंज्ञं भवति। होत्रेऽनुगृणाति [प्रतिगृणाति] होतारं शंसन्तं प्रोत्साहयतीत्यर्थः।

## साधकतमं करणम् ( १-४-४२ ) -४४

साधकतमम्। करणम्। क्रियासिद्धौ यत्प्रकृष्टोपकारकं विवक्षितं

  

तत्साधकतमं कारकं करणसंज्ञं भवति। दात्रेण लुनाति। परशुना छिनत्ति। करणसंज्ञायां 'कर्तृकरणयोस्तृतीया' ( २-३-१८ ) इति तृतीया विभक्तिर्भवति।

## दिवः कर्म च ( १-४-४३ )

दिवु (=क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु) धातोः साधकतमं यत्कारकं तत्कर्मसंज्ञं भवति चकारात्करणसंज्ञं च। अक्षान् दीव्यति। अक्षैर्दीव्यति।

## परिक्रयणे सम्प्रदानमन्यतरस्याम् ( १-४-४४ )

परिक्रयणे। सम्प्रदानम्। अन्यतरस्याम्। परिक्रयणे साधकतमं कारकमन्यतरस्याम् सम्प्रदानसंज्ञं भवति। पक्षे करणं च। परिक्रयणं नियतकालं वेतनादिना स्वीकरणम्। शतेन परिक्रीतोऽनुब्रूहि। शताय परिक्रीतोऽनुब्रूहि। सहस्रेण परिक्रीतोऽनुब्रूहि। सहस्राय परिक्रीतोऽनुब्रूहि।

## आधारोऽधिकरणम् ( १-४-४५ )

आधारः। अधिकरणम्। कर्तृकर्मणोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणसंज्ञं भवति। कटे आस्ते। कटे शेते। स्थाल्यां पचति। अधिकरणसंज्ञायां 'सप्तम्यधिकरणे च' ( २-३-३६ ) इति सप्तमीविभक्तिः।

## अधिशीङ्स्थासां कर्म ( १-४-४६ )

अधिशीङ्स्थासाम्। कर्म। शीङ् च स्थाश्च आस् च, शीङ्स्थासः ( स० द्व० )अधेः शीङ्स्थास्=अधिशीङ्स्थास्तेषाम् ( ष० त० )। अधिपूर्वकाणां शीङ्स्थासामाधारो यस्तत्कारकं कर्मसंज्ञं भवति। पूर्वस्यापवादः। ग्राममधिशेते। ग्राममधितिष्ठति। पर्वतमध्यास्ते।

## अभिनिविशश्च ( १-४-४७ )

अभिनिविशः । च । अभिश्च निश्च अभिनि ( स० द्व० ), तस्मात् विश्-अभिनिविट् तस्य ( प० त० ) । अभिनिपूर्वस्य विश् ( =प्रवेशने ) धातोराधारोयस्तत्कारकं कर्मसंज्ञं भवति । ग्राममभिनिविशते ।

## उपान्वध्याङ्वसः ( १-४-४८ )

उपश्च अनुश्च अधिश्च आङ् च उपान्वध्याङ्स्तेभ्यो वस् उपान्वध्याङ्तस्यवस्, ( द्वन्द्वगर्भस्तत्पुरुषः ) । उप-अनु-अधि-आङ् पूर्वस्य वस् (=निवासे ) धातोराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममुपवसति सेना । पर्वतमुपवसति । ग्राममनुवसति । ग्राममधिवसति । ग्राममावसति ।

## कर्त्तुरीप्सिततमं कर्म ( १-४-४६ ) -५३

कर्त्तुः । ईप्सिततमम् । कर्म । कर्त्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं भवति । कटं करोति । ग्रामं गच्छति ।

## तथायुक्तं चानीप्सितम् ( १-४-५० )

तथायुक्तम् । च । अनीप्सितम् । तेनप्रकारेण युक्तं तथायुक्तम् 'मयूरव्यंसकादयश्च' ( २-१-७१ ) इति तत्पुरुषसमासः । न ईप्सितम् अनीप्सितम् ( न० त० ) येन प्रकारेण कर्त्तुरीप्सिततमं क्रियया युज्यते तेनैव चेत् प्रकारेण यदनीप्सितं क्रिययायुक्तं भवति तत् कर्मसंज्ञं भवति । ईप्सितादन्यत्सर्वमनीप्सितं-द्वेष्यमितरच्च । विषं भक्षयति । चौरान् पश्यति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति ।

## अकथितं च ( १-४-५१ )

अकथितम् । च । न कथितम् अकथितम् ( न० त० ) अपादानादि-

विशेषकथाभिर्न कथितमित्यर्थः। अकथितं च यत्कारकं तत्कर्मसंज्ञं भवति। गां दोग्धि पयः। पौरवं गां याचते। गामवरुणाद्धि व्रजम्। माणवकं पन्थानं पृच्छति। पौरवं गां भिक्षते। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते। माणवकं धर्ममनुशास्ति। एतेषु क्रमेण गाम्, पौरवम्, व्रजम्, माणवकम्, पौरवम्, वृक्षम् इत्येषां पदानां प्रकृतसूत्रेण कर्मसंज्ञाऽस्ति सा चाप्रधाना, प्रधानं कर्म तु पयःप्रभृतिद्वितीयपदमेव। यस्य धातोः प्रयोगे द्विकर्मता तत्रैवेयं प्रधानाऽप्रधानता। परिगणनं खलु कृतं पूर्वाचार्य्यैस्तादृशधातूनां वक्ष्यमाणकारिकायाम्—

दुहियाचिरुधिपृच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना॥

उपयुज्यते इत्युपयोगः। दुह (=प्रपूरणे) इत्यादिधातोर्य उपयोगः पयः प्रभृति तस्य यन्निमित्तं गवादि पूर्वसूत्रेष्वनिर्दिष्टकारकं तदेवेह कर्मसंज्ञं विधीयते। ब्रूञ् (=व्यक्तायां वाचि)-शासु (=अनुशिष्टौ) धात्वोर्योर्गुणः=साधनं प्रधानं कर्म तेन यत्सम्बध्यते माणवकादिकं तदप्यकथितमुक्तं सूत्रेकारेणेत्यर्थः।

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ (१-४-५२)

गतिः ······अकर्मकाणाम्। अणि। कर्त्ता। स। णौ। 'गतिबुद्धि०' इत्यत्रेतरद्वन्द्वसमासः[1]। न णिः, अणिस्तस्मिन्। गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानाम् (=अभ्यवहारार्थानाम्) धातूनां तथा शब्दकर्मकाणां अकर्मकाणाञ्च धातूनाम् अण्यन्तानां यः कर्त्ता स ण्यन्तानां कर्मसंज्ञः

[1]—गतिश्च बुद्धिश्च प्रत्यवसानं च गतिबुद्धिप्रत्यवसानानि तान्यर्था येषां ते गतिबुद्धिप्रत्यवसानार्थाः (द्वन्द्वगर्भो बहुव्रीहिः)। शब्दश्चादः कर्म च शब्दकर्म तद्येषां ते शब्दकर्मणः (तत्पुरुषगर्भबहु०)। न कर्म येषां तेऽकर्मकाः (बहु०)।

  

भवति। गत्यर्थानाम्—गच्छति माणवको ग्रामम्। गमयति माणवकं ग्रामम्। बुद्ध्यर्थानाम्-बुध्यते माणवको धर्मम्। बोधयति माणवकं धर्मम्। वेत्ति माणवको धर्मम्। वेदयति माणवकं धर्मम्। प्रत्यवसानार्थानाम्—भुङ्क्ते माणवक ओदनम्। भोजयति माणवकमोदनम्। अश्नाति माणवक ओदनम्, आशयति माणवक मोदनम्। शब्दकर्मणाम्—अधीते माणवको वेदम्। अध्यापयति माणवकं वेदम्। पठति माणवको वेदम्। अकर्मकाणाम्—अस्ति देवदत्तः। आसयति देवदत्तम्। शेते देवदत्तः। शाययति देवदत्तम्।

## हृक्रोरन्यतरस्याम् ( १-४-५३ )

हृक्रोः। अन्यतरस्याम्। हृश्च कृश्च हृकरौ तयोः (इ० द्व०)। हृक्रोरण्यन्तयोर्यः कर्त्ता स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति। हरति भारं माणवकः। हारयति भारं माणवकं माणवकेनेति वा। करोति कटं देवदत्तः। कारयति कटं देवदत्तं देवदत्तेनेति वा। कर्मसंज्ञाऽभावपक्षे 'स्वतन्त्रः कर्त्ता' ( १-४-५४ ) इति कर्तृसंज्ञा 'कर्तृकरणयोस्तृतीया' ( २-३-१८ ) इति च तृतीया विभक्तिर्भवति।

## स्वतन्त्रः कर्त्ता ( १-४-५४ ) -५५

क्रियाप्रसिद्धौ यः स्वतन्त्रः प्रधानभूतस्तत्कारकं कर्तृसंज्ञं भवति। देवदत्तः पचति। स्थाली पचति। 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( २-३-४६ ) इति प्रथमाविभक्तिः।

## तत्प्रयोजको हेतुश्च ( १-४-५५ )

तत्प्रयोजकः। हेतुः। च। तस्य प्रयोजकः तत्प्रयोजकः ( ष० त० )। स्वतन्त्रस्य कर्तुः प्रयोजको योऽर्थस्तत्कारकं हेतुसंज्ञं भवति चात् कर्तृ-

  

संज्ञं च। कुर्वाणं प्रयुङ्क्ते-कारयति। हेतुसंज्ञायां सत्यां 'हेतुमति च' (३-१-२६) इति हेतुमत्यभिधेये धातोर्णिच् प्रत्ययो भवति।

## प्राग्रीश्वरान्निपाताः (१-४-५६)

प्राक्। रीश्वरात्। निपाताः। 'अधिरीश्वरे' (१-४-९७) इत्येतस्माद् अवधेः प्राग् येऽनुक्रमिष्यन्ते ते निपातसंज्ञा वेदितव्या। अधिकारसूत्रमिदम्। च, वा, अह। निपात संज्ञायां सत्याम् 'स्वरादिनिपातमव्ययम्' (१-१-३७) इत्यव्यय संज्ञा भवति 'तत्तोऽव्ययादापसुपः' (२-४-८२) इति आप्सुपो लुग्। प्रागिति वचनं गत्युपसर्ग कर्मप्रवचनीयसंज्ञाभिः सह संज्ञा समावेशार्थम्। अवचने हि 'आकडारादेका संज्ञा' (१-४-१) इति नियमादेकस्यां गत्यादिसंज्ञायां जातायां द्वितीया न स्यात्।

## चादयोऽसत्त्वे (१-४-५७)

चादयः। असत्त्वे। च आदिर्येषां ते चादयः (बहु०)। न सत्त्वम् असत्त्वं तस्मिन् (न० त०)। चादयो निपातसंज्ञा भवन्ति न चेत्सत्त्वे (=द्रव्ये) वर्त्तन्ते। च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत् इत्यादयः। इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमुच्यते। उक्तञ्च—"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः" इति।

## प्रादयः (१-४-५८)

प्र आदिर्येषां ते प्रादयः (बहु०)। प्रादयोऽसत्त्वे वर्त्तमाना निपातसंज्ञा भवन्ति। प्र, परा, अप, सम्, अनु, अव, निस्, निर, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप। पृथग्योगकरणम् 'उपसर्गाः क्रियायोगे' (१-४-५९) इति वक्ष्यमाणसूत्रे चादीनामुपसर्गसंज्ञाबाधनार्थम्।

## उपसर्गाः क्रियायोगे ( १-४-५९ ) -७९

क्रियया योगः क्रियायोगस्तस्मिन् ( तृ० त० )। प्रादयः क्रियायोगे उपसर्गसंज्ञा भवन्ति। प्रणयति, प्रणायकः, परिणायकः। प्रादेरुपसर्गसंज्ञायां सत्याम् 'उपसर्गादसमासेऽपि णोपदेशस्य' (८-४-१४) इति धातुनकारस्य णकारः।

## गतिश्च ( १-४-६० ) -८२

गतिः। च। गतिसंज्ञाश्च प्रादयो भवन्ति क्रियायोगे। प्रकृत्य। प्रकृतम्। यत् प्रकरोति। प्रकृत्येति प्रस्य गतिसंज्ञायां सत्यां 'कुगतिप्रादयः' ( २-२-१८ ) इति तत्पुरुषसमासः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' ( ७-१-३७ ) इति ल्यप्प्रत्ययः। प्रकृतमिति 'गतिरनन्तरः' ( ६-२-४९ ) इतिपूर्वपदप्रकृतिस्वरः। यत् प्रकरोतीति तिङः प्रसक्तस्य निघातस्य 'निपातैर्यद्यदि०' ( ८-१-३० ) इति निषेधे तिपः पित्त्वादनुदात्तत्वम्, विकरणस्योदात्तत्वम्। प्रशब्दस्य 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वे प्राप्ते 'तिङि चोदात्तवति' ( ८-१-७१ ) इति तिङन्ते उदात्तवति परतोऽनुदात्तत्वं भवति। शिष्टमनुदात्तमुदात्तादुत्तरं स्वरितं च। एतच्च प्रयोजनत्रयमुत्तरत्रापि गतिसंज्ञायां वेदितव्यम्।

## ऊर्यादिच्विडाचश्च ( १-४-६१ )

ऊर्यादिच्विडाचः। च। ऊरी आदिर्येषां त ऊर्यादयः ( बहु० )। च्विश्च डाच्च च्विडाचौ ( इ० द्व० )। ऊर्यादयश्च्विडाचौ च ऊर्यादिच्विडाचः। ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति। ऊरीकृत्य, ऊरीकृतम्, यदूरीकरोति। उररीकृत्य, उररीकृतम्, यदुररीकरोति। च्व्यन्ताः—शुक्लीकृत्य, शुक्लीकृतम्, यच्छुक्लीकरोति। 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (५-४-५०) इति च्विः

  

प्रत्ययः 'अस्य च्वौ' (७-४-३२) इतीत्वम्। डाजन्ताः—पटपटाकृत्य, पटपटाकृतम्, यत्पटपटाकरोति'। 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनि डाच्' (५-४-५७) इति डाच्प्रत्ययः। 'डाचि द्वे भवत इति वक्तव्यम्' (८-१-१२ वा०) इति द्वित्वम्। 'नित्यमाम्रेडिते डाचि' इति पररूपत्वम्।

## अनुकरणं चानितिपरम् (१-४-६२)

अनुकरणम्। च। अनितिपरम्। इति परो यस्मात् तदितिपरम् (बहु०)। नेतिपरम् अनितिपरम् (न० त०)। अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति। खाट्कृत्य, खाट्कृतम् यत् खाट्करोति।

## आदरानादरयोः सदसती (१-४-६३)

आदरश्चानादरश्च आदराऽनादरौ तयोः (इ० द्व०)। सच्च असच्च सदसती (इ० द्व०) आदरानादरयोर्यथाक्रमं सदसच्छब्दौ गतिसंज्ञौ भवतः। सत्कृत्य, सत्कृतम्, यत्सत्करोति'। असत्कृत्य, असत्कृतम्, यदसत्करोति।

## भूषणेऽलम् (१-४-६४)

भूषणे। अलम्। भूषणेऽर्थे योऽलं शब्दः स गतिसंज्ञो भवति। अलंकृत्य, अलंकृतम्, यदलंकरोति।

## अन्तरपरिग्रहे (१-४-६५)

अन्तर्। अपरिग्रहे। न परिग्रहोऽपरिग्रहस्तस्मिन् (न० त०)। परिग्रहः स्वीकरणं तदभावोऽपरिग्रहः। तस्मिन्नर्थे अन्तःशब्दो गतिसंज्ञो भवति। अन्तर्हत्य, मध्ये हत्वेत्यर्थः। अन्तर्हतम्, यदन्तर्हन्ति'।

## कणेमनसी श्रद्धाप्रतीघाते (१-४-६६)

कणे च मनस् च कणेमनसी (इ० द्व०)। श्रद्धायाः प्रतिघातः

प्रतीघातस्तस्मिन् ( ष० त० )। कणेशब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः। कणेहत्य पयः पिबति। मनोहत्य पयः पिबति। तावत् पिबति यावदस्याभिलाषो निवृत्तः। श्रद्धा प्रतिहतेत्यर्थः।

## पुरोऽव्ययम् ( १-४-६७ ) -६६

पुरः। अव्ययम्। पूर्वाधरावराणामसि पुरधवश्चैषाम् ( ५-३-३९ ) इत्यासिप्रत्ययान्तः पुरःशब्दोऽव्ययं स गतिसंज्ञो भवति। पुरस्कृत्य, पुरस्कृतम्, यत्पुरस्करोति।

## अस्तं च ( १-४-६८ )

अस्तम्। च। अस्तं शब्दोऽव्ययम् (अनुपलब्धौ वर्त्तमानः) गतिसंज्ञो भवति। अस्तंगत्य सविता पुनरुदेति। अस्तंगतानि धनानि। यदस्तंगच्छति।

## अच्छ गत्यर्थवदेषु ( १-४-६९ )

अच्छ। गत्यर्थवदेषु। गतिरर्थो येषां ते गत्यर्थाः ( बहु० )। गत्यर्थाश्च वदश्च गत्यर्थवदास्तेषु ( इ० द्व० )। अच्छशब्दोऽव्ययं गत्यर्थेषु धातुषु वदतौ च वर्त्तमानो गतिसंज्ञो भवति। अच्छगत्य, अच्छगतम्, यदच्छगच्छति। अच्छोद्य, अच्छोदितम्, यदच्छवदति।

## अदोऽनुपदेशे ( १-४-७० )

अदः। अनुपदेशे। न उपदेशोऽनुपदेशतस्मिन् ( न० त० )। उपदेशः परार्थप्रयोगः, तदभावः स्वबुद्ध्या परामर्शमात्रमनुपदेशः। अदःशब्दः ( त्यदादिषु पठ्यमानः ) अनुपदेशे गतिसंज्ञो भवति। अदःकृत्य, अदःकृतम्, यददः करोति। अदःकृत्येति-एतत्कर्त्तव्यमिति स्वयमालोच्येत्यर्थः।

## तिरोऽन्तर्द्धौ ( १-४-७१ )

तिरः । अन्तर्द्धौ । अन्तर्द्धौ व्यवधानेऽर्थे वर्त्तमानस्तिरश्शब्दो ग संज्ञो भवति । तिरोभूय, तिरोभूतम् यत्तिरोभवति ।

## विभाषा कृञि ( १-४-७२ )

पूर्वसूत्रेण प्राप्ते सति विभाषाऽऽरभ्यत इति प्राप्तविभाषेयम् । ति शब्दः करोतौ परतोऽन्तर्द्धावर्थे विभाषा गतिसंज्ञो भवति । तिरःकृ तिरस्कृत्य । तिरःकृतम्, तिरस्कृतम् । यत्तिरःकरोति, यत्तिरस्करोति । तिपक्षे तिरः कृत्वेत्यादि । 'तिरसोऽन्यतरस्याम्' ( ८-३-४२ ) इति वि गतिसंज्ञकस्य विसर्जनीयस्य विकल्पेन सकारो भवति कुप्वोः प तेन रूपद्वयनिष्पत्तिः । गतिसंज्ञाऽभावे समासो न भवतीति तिरः त्यत्र समासाश्रयल्यबादेशो न ।

## उपाजेऽन्वाजे ( १-४-७३ )

उपाजे । अन्वाजे । इमौ शब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्ब सामर्थ्याधाने वर्त्तते, तौ कृञि विभाषा गतिसंज्ञौ भवतः । उपाजे उपाजे कृत्वा । अन्वाजेकृत्य अन्वाजे कृत्वा । सामर्थ्यं कृत्वेत्यर्थः ।

## साक्षात्प्रभृतीनि च ( १-४-७४ )

साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भव साक्षात्कृत्य, साक्षात् कृत्वा । मिथ्याकृत्य, मिथ्या कृत्वा । चिन्ता चिन्ताकृत्वा ।

## अनत्याध्यान उरसिमनसी ( १-४-७५ )

अनत्याध्याने । उरसिमनसी । अतितरामाधानमत्याधानमुप मिति यावत् । तदभावोऽनत्याधानम् ( न० त० ) । उरसि च मन

उरसिमनसी (इ० द्व०)। अनत्याध्यानेऽर्थे उरसिमनसिशब्दौ विभाषा कृञि गतिसंज्ञौ भवतः। उरसिकृत्य, उरसिकृत्वा। अभ्युपगम्येत्यर्थः। मनसिकृत्य मनसिकृत्वा। निश्चित्येत्यर्थः।

## मध्येपदेनिवचने च (१-४-७६)

मध्ये। पदे। निवचने। च। मध्ये, पदे, निवचने, इत्येते शब्दा अनत्याध्याने विभाषा कृञि गतिसंज्ञा भवन्ति। मध्येकृत्य, मध्ये कृत्वा। पदेकृत्य, पदे कृत्वा। निवंचनं वचनाभावः, अर्थाऽभावेऽव्ययीभावः। निवचनेकृत्य, निवचने कृत्वा। (वाचं नियम्येत्यर्थः)। उच्चारणसामर्थ्यात् सप्तम्याः समासेऽप्यलुक्। मध्येपदे शब्दौ सप्तम्यन्तप्रतिरूपकौ निपातौ।

## नित्यं हस्ते पाणावुपयमने (१-४-७७)

नित्यम्। हस्ते। पाणौ। उपयमने। हस्ते पाणौ इत्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमने। पाणौकृत्य। हस्तेकृत्य। दारकर्म कृत्वेत्यर्थः। सप्तम्याः पूर्ववदलुक्।

## प्राध्वं बन्धने (१-४-७८)

प्राध्वम्। बन्धने। बन्धने वर्त्तमानः प्राध्वं शब्दोऽव्ययं कृञि गतिसंज्ञो भवति। प्राध्वंकृत्य। बन्धनेन निमित्तेनानुकूल्यं कृत्वेत्यर्थः।

## जीविकोपनिषदावौपम्ये (१-४-७९)

जीविकोपनिषदौ। औपम्ये। जीविका चोपनिषच्च जीविकोपनिषदौ (इ० द्व०)। उपमाया भाव औपम्यम्। औपम्ये वर्त्तमानौ जीविकोपनिषच्छब्दौ कृञि गतिसंज्ञौ भवतः। जीविकाकृत्य, उपनिषत्कृत्य। जीवनोपायमिव कृत्वा, रहस्यमिव कृत्वेत्यर्थः।

## ते प्राग्धातोः ( १-४-८० )

ते। प्राक्। धातोः। ते गत्युपसर्गसंज्ञका धातोः प्राक् ( पूर्वे ) प्रयुज्यन्ते। तथा चैवोदाहृतम्।

## छन्दसि परेऽपि ( १-४-८१ )

छन्दसि। परे। अपि। छन्दसि वेदविषये गत्युपसर्गसंज्ञका धातोः परेऽपि पूर्वेऽपि प्रयुज्यन्ते। याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना। निशब्दोऽत्रोपसर्गः।

## व्यवहिताश्च ( १-४-८२ )

व्यवहिताः। च। व्यवहिता अपि गत्युपसर्गसंज्ञकाश्छन्दसि प्रयुज्यन्ते। आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। (ऋग्वेदः ३-४५-१) धातूपसर्गयोर्मध्ये पदत्रयस्य व्यवधानम्। आयाहि ॥ ( ऋ० ३-४३-२)

## कर्मप्रवचनीयाः ( १-४-८३ )

यानित ऊर्ध्वमनुक्रमिष्यामस्ते कर्मप्रवचनीयसंज्ञा वेदितव्याः। कर्मप्रवचनीयत्वे प्रयोजनं 'कर्मप्रवचनीययुक्ते द्वितीया' ( २-३-८ ) इति द्वितीया विभक्तिः। अन्वर्था संज्ञा कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति

## अनुर्लक्षणे ( १-४-८४ )

अनुः। लक्षणे। अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। शाकल्यस्य संहितामनुप्रावर्षत्। अनडुद्यज्ञमन्वसिञ्चत्। अगस्त्यमन्वसिञ्चन् प्रजाः। शाकल्यस्येतिशाकल्येन सुकृतां संहितामनुनिशम्य ( श्रुत्वा ) देवः प्रावर्षत् इत्यर्थः।

## तृतीयार्थे ( १-४-८५ )

तृतीयाया अर्थस्तृतीयार्थस्तस्मिन् ( ष० त० )। अनुशब्दस्तृतीयार्थे

द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। नदीमन्ववसिता सेना। पर्वतमन्ववसिता सेना। नद्या पर्वतेन वा सम्बद्धेत्यर्थः।

## हीने (१-४-८६)

हीने न्यूने द्योत्येऽनुः कर्मप्रवचनीयसंज्ञो भवति। अनुशाकटायनं वैयाकरणाः। अन्वर्जुनं योद्धारः। शाकटायनमर्जुनं चापेक्ष्यान्ये हीना इत्यर्थः।

## उपोऽधिके च (१-४-८७)

उपः। अधिके। च। उपशब्दोऽधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। अधिके-उपखार्यां द्रोणः। उपनिष्के कर्षापणम्। खार्यां द्रोणोऽधिकः, निष्के कर्षापणमधिकमित्यर्थः। यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी (२-३-९) इति कर्मप्रवचनीययुक्ते सप्तमीविभक्तिः। हीने-उपशाकटायनं वैयाकरणाः।

## अपपरी वर्जने (१-४-८८)

अपश्च परिश्च अपपरी (इ० द्व०)। अपपरिशब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः। अपत्रिगर्त्तेभ्यो वृष्टो देवः। परिपरित्रिगर्तेभ्यो वृष्टो देवः। 'पञ्चम्यापाङ्परिभिः' (२-३-१०) इति कर्मप्रवचनीययुक्ते पञ्चमीविभक्तिः। परेर्वर्जने (८-१-५) इति द्विर्वचनम्। त्रिगर्त्तान् वर्जयित्वा वृष्ट इत्यर्थः।

## आङ् मर्यादावचने (१-४-८९)

मर्यादाया वचनं मर्यादावचनं तस्मिन् (ष० त०)। आङित्येष शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति। मर्यैर्मनुष्यैरादीयत इति मर्यादा अवधिरित्यर्थः आपाटलिपुत्राद् वृष्टो देवः। आकुमारं यशः पाणिनेः।

  

आसांकाश्यात्। आमथुरायाः। "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित्"। विना तेन मर्यादा सह तेनाभिविधिरिति विवेकः। पूर्ववदेवात्र पञ्चमीविभक्तिः।

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ( १-४-९० )

लक्षणं चेत्थंभूताख्यानं च भागश्च वीप्सा च=लक्षणेत्थंभूताख्यानभागवीप्सास्तासु, ( इ० द्व० )। इत्थंभूतस्याख्यानमित्थंभूताख्यानं ( ष० त० )। प्रतिश्च परिश्च अनुश्च =प्रतिपर्यनवः ( इ०द्व० )। लक्षणे; इत्थंभूताख्याने, भागे, वीप्सायां च विषयभूतायां प्रति, परि, अनु-इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति। लक्षणे-वृक्षं प्रति विद्योतते विद्युत्। वृक्षं परि, वृक्षमनु। इत्थंभूताख्याने-साधुर्देवदत्तो मातरं प्रति, मातरं परि, मातरमनु। भागे-यदत्र मां प्रति स्यात्, मां परि स्यात्, मामनु स्यात्। वीप्सायाम्-वृक्षं वृक्षं प्रति सिञ्चति, परि सिञ्चति, अनु सिञ्चति।

## अभिरभागे ( १-४-९१ )

अभिः। अभागे। नभागोऽभागस्तस्मिन् ( न० त० )। लक्षणादिष्वेव भागवर्जितेषु अभिः कर्मप्रवचनीयसंज्ञो भवति। वृक्षमभि विद्योतते। साधुर्देवदत्तो मातरमभि। वृक्षमभि सिञ्चति।

## प्रतिः प्रतिनिधिप्रतिदानयोः ( १-४-९२ )

प्रतिनिधिश्च प्रतिदानञ्च प्रतिनिधिप्रतिदाने तयोः ( इ० द्व० )। मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। प्रतिनिधौ प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति। अभिमन्युरर्जुनात् प्रति। माषानस्मै तिलेभ्यः प्रतियच्छति। 'प्रतिनिधिप्रतिदाने च यस्मात्' ( २-३-११ ) इति पञ्चमीविभक्तिः।

## अधिपरी अनर्थकौ ( १-४-९३ )

अधिश्च परिश्च अधिपरी ( इ० द्व० )। न विद्यतेऽर्थान्तरं ययोस्तौ

अनर्थकौ ( ब० स० )। 'ईदूदेद्०' ( १-१-१४ ) इति प्रगृह्यसंज्ञा। अधि-परिशब्दावनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः। कुतोऽध्यागच्छति, कुतः पर्यागच्छति। किंशब्दात् 'पञ्चम्यास्तसिल्' (५-३-७) इति तसिल्प्रत्यये, 'कुतिहोः' ( ७-२-१०४ ) इति कुत्वे च कुत इति। कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधितत्वाद् 'गतिर्गतौ' (८-१-७०) इति अधिपर्योः निघातो न भवति।

## सुः पूजायाम् ( १-४-९४ )

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति। सुसिक्तं भवता, सुस्तुतं भवता। उपसर्गसंज्ञाश्रयं षत्वं न भवति 'उपसर्गात् सुनोति०' ( ८-३-६५ ) इत्यादिना।

## अतिरतिक्रमणे च ( १-४-९५ )

अतिः। अतिक्रमणे च। अतिशब्दोऽतिक्रमणे पूजायां चार्थे कर्मप्रवचनीयसंज्ञो भवति। निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिरतिक्रमणम्। अतिसिक्तमेव भवता। अतिस्तुतमेव भवता। पूजायाम्-अतिसिक्तं, अतिस्तुतं भवता। शोभनं कृतमित्यर्थः।

## अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ( १-४-९६ )

पदार्थश्च, संभावना च, अन्ववसर्गश्च, गर्हा च=समुच्चयश्च पदार्थसंभावनान्ववसर्गगर्हासमुच्चयास्तेषु ( इ० द्व० )। अपिशब्दः पदार्थादिषु वर्त्तमानः कर्मप्रवचनीयसंज्ञो भवति। पदार्थे-सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात्। सम्भावने-अपि सिञ्चेन्मूलकसहस्रम्, अपि स्तुयाद्राजानम्। अन्ववसर्गे ( कामचाराभ्यनुज्ञायां ) अपि सिञ्च, अपि स्तुहि। गर्हायाम्-धिग् जाल्मं देवदत्तम् अपि सिञ्चेत् पलाण्डुम्। अपि स्तुयाद्वृषलम्। समुच्चये-अपि सिञ्च, अपि स्तुहि। उपसर्गसंज्ञाबाधनात्षत्वबाधः।

## अधिरीश्वरे ( १-४-९७ ) -९८

अधिः। ईश्वरे। अधिशब्द ईश्वरे स्वामिनि द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। अधिब्रह्मदत्तो पञ्चालाः, अधिपञ्चालेषु ब्रह्मदत्तः। स्वस्वामिसम्बन्धे कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः (सप्तमी) भवति कदाचित् स्वात्। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' ( २-३-९ ) इति सप्तमीविभक्तिः।

## विभाषा कृञि ( १-४-९८ )

कृञो योगेऽधिर्विभाषा कर्मप्रवचनीयसंज्ञो भवति। यदत्र मामधिकरिष्यति। कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् 'तिङि चोदात्तवति' ( ८-१-७१ ) इति निघातो न भवति। गतिसंज्ञापक्षे भवत्येव निघातः-यदत्र मामधिकरिष्यति-इति।

## लः परस्मैपदम् ( १-४-९९ ) -१००

'लः' इति षष्ठी आदेशापेक्षा। लस्य आदेशा परस्मैपदसंज्ञा भवन्ति। तिप्तस्झि, सिप्थस्थ, मिब्वस्मस्, शतृक्वसू च।

## तङानावात्मनेपदम् ( १-४-१०० )

तङानौ। आत्मनेपदम्। तङ् च आनश्च तङानौ ( इ० द्व० )। तङिति प्रत्याहारो गृह्यते-तातांझ, थासाथांध्वम्, इड्वहिमहिङ्-इति नवानां वचनानाम्। आन इति शानच्कानचावुत्सृष्टानुबन्धकौ गृह्येते। तङानावात्मनेपदसंज्ञौ भवतः।

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ( १-४-१०१ ) -१०४

तिङः। त्रीणि। त्रीणि। प्रथममध्यमोत्तमाः। प्रथमश्च मध्यमश्चोत्तमश्च प्रथममध्यमोत्तमाः ( इ० द्व० )। तिङ इति प्रथमाबहुवचनम्।

तिङोऽष्टादशप्रत्ययाः, नव परस्मैपदसंज्ञकाः, नवात्मनेपदसंज्ञकाः। तत्र परस्मैपदेषु आत्मनेपदेषु च त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञका भवन्ति। परस्मैपदेषु तावत्-तिप् तस् झि-इति प्रथमः। सिप्थस्थ-इति मध्यमः। मिब्वस्मस्-इत्युत्तमः। आत्मनेपदेषु खल्वपि-त आताम् झ-इति प्रथमः। थास् आथाम् ध्वम्-इति मध्यमः। इट् वहि महिङ्-इत्युत्तमः।

## तान्येकवचनद्विवचनबहुवचनान्येकशः ( १-४-१०२ ) -१०३

तानि। एकवचनद्विवचनबहुवचनानि। एकशः। एकवचनं च द्विवचनं च बहुवचनं च एकवचनद्विवचनबहुवचनानि (इ० द्व०)। उक्तानि तिङस्त्रीणि त्रीणि पदानि एकशः एकवचन-द्विवचन-बहुवचन-संज्ञानि भवन्ति। तिप्-इत्येकवचनम्। तस्-इति द्विवचनम्। झि-इति बहुवचनम्। एवं सिबादेरपि एकवचनादिसंज्ञा विज्ञेया।

## सुपः ( १-४-१०३ ) -१०४

सुपः। इदमपि प्रथमा बहुवचनम्। सुबिति प्रत्याहारोऽयं सुशब्दादारभ्य सप्तमीबहुवचनस्य-सुप्प्रत्ययस्य पकारेण। सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति। सु-इत्येकवचनम्। औ-इति द्विवचनम्। जस्-इति बहुवचनम्। एवं सर्वत्र विभक्तिषु योज्यम्।

## विभक्तिश्च ( १-४-१०४ )

विभक्तिः। च। त्रीणि त्रीणि विभक्तिसंज्ञाश्च भवन्ति सुपस्तिङश्च। तथोदाहृतम्।

## युस्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ( १-४-१०५ ) -१०६

युष्मदि। उपपदे। समानाधिकरणे। स्थानिनि। अपि। मध्यमः। तिङां पुरुषनियमार्थोऽयमारम्भः। युष्मद्युपपदे सति व्यवहिते चाव्यवहिते

च सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति। त्वं पचसि। युवां पचथः, यूयं पचथ। अप्रयुज्यमानेऽपि-पचसि। पचथः। पचथ।

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ( १-४-१०६ )

प्रहासे। च। मन्योपपदे। मन्यतेः। उत्तमः। एकवत्। च। मन्यति शब्दस्यैकदेशानुकरणं मन्येति। मन्य उपपदं यस्य स मन्योपपदस्तस्मिन् (बहु०)। प्रहासे (परिहासे) गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेर्धातोश्चोत्तमः स चैकवद् भवति। एहि मन्ये ओदनं भोक्ष्यसे इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि, नहि यास्यसि, यातस्तेन ते पिता। मध्यमोत्तमयोः प्राप्तयोरुत्तममध्यमौ विधीयेते।

## अस्मद्युत्तमः ( १-४-१०७ )

अस्मदि। उत्तमः। अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति। अहं पचामि। आवां पचावः। वयं पचामः। अप्रयुज्यमानेऽपि-पचामि। पचावः। पचामः।

## शेषे प्रथमः ( १-४-१०८ )

यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः स शेषः, तस्मिन् शेषे उपपदे समानाधिकरणे प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि प्रथमपुरुषो भवति। स पचति। तौ पचतः। ते पचन्ति। अप्रयुज्यमानेऽपि-पचति। पचतः। पचन्ति।

## परः सन्निकर्षः संहिता ( १-४-१०९ )

अतिशयार्थ इह परशब्दः। सन्निकर्षः प्रत्यासत्तिः। परो यः सन्निकर्षो वर्णानामर्धमात्राकालव्यवधानं स संहितासंज्ञो भवति। दध्यत्र।

मध्वत्र। संहितासंज्ञायां सत्यां तद्विषये 'इको यणचि' (६-१-७७) इत्येवमादयो विधयो भवन्ति।

## विरामोऽवसानम् (१-४-११०)

विरामः। अवसानम्। विरतिर्विरामः वर्णोच्चारणाभाव इति यावत्। सोऽवसानसंज्ञो भवति। दधिँ। मधुँ। वृक्षः। प्लक्षः। अवसान-संज्ञायां सत्यां तदाश्रयः 'वाऽवसाने;' 'अणोऽप्रगृह्यस्यानुनासिकः' (८-४-५७।५८) इत्यणो विकल्पितानुनासिकादेशः, 'खरवसानयोर्विसर्जनीयः' (८-३-१५) इति च रेफस्य विसर्जनीयो भवति।

इति प्रथमाध्यायस्य चतुर्थः पादः।

इति श्रीजयदत्तशास्त्रिविरचितायां लघुकाशिकायां वृत्तौ प्रथमोऽध्यायः।

—*०*—

# अथ द्वितीयाध्यायस्य प्रथमः पादः

## समर्थः पदविधिः ( २-१-१ )

समर्थः । पदविधिः । समर्थः शक्तः । विधीयते इति विधिः विपूर्वा[illegible] धात्वः कर्मसाधनः 'उपसर्गे घोः किः' ( ३-३-९२ ) इति किप्रत्ययः[illegible] पदानां विधिः पदविधिः ( ष० त० )। किं पुनर्विधीयते ? समा[illegible] विभक्तिः पराङ्गवद्भावश्च । समर्थत्वं नाम पृथगर्थानामेकार्थीभावः[illegible] परिभाषासूत्रमिदम् । यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स समर्थ[illegible] भवतीति वेदितव्यम् । चतुर्विधं चेदं समर्थं-संगतार्थं समर्थं, संसृष्टार्थं समर्थं, सम्प्रेक्षितार्थं समर्थं, सम्बद्धार्थं समर्थमिति । येन सह य[illegible] योगो भवति तेन सह स समर्थो भवति। कष्टं श्रितः=कष्टश्रितः[illegible] 'द्वितीया श्रितातीत०' ( २-१-२४ ) इति द्वितीयान्तस्य कष्टशब्दस्य श्रि[illegible] शब्देन सह यो योगः स समर्थः, अतएव समासो भवति। एवमे[illegible] शंकुलया खण्डः शंकुलाखण्डः इत्यादौ 'तृतीया तत्कृतार्थेन गुणवचनेन'[illegible] (२-१-३०) इति तृतीयान्तस्य समर्थस्य शंकुलशब्दस्य समर्थेन खण्डशब्दे[illegible] सह समासः ।

## सुबामन्त्रिते पराङ्गवत् स्वरे ( २-१-२ ) -२।२।३[illegible]

सुप् । आमन्त्रिते । पराङ्गवत् । स्वरे । अंगेन तुल्यं अंगवत्, प[illegible] स्यांगवत् परांगवत् ( ष० त० )। परैकदेशवदित्यर्थः । सुबन्तमामन्त्रि[illegible]

परतः परस्यांगवद् भवति, स्वरे कर्त्तव्ये। सुबन्तमामन्त्रितमनुप्रविश्य तदवयववद् भवतीत्यर्थः। 'आमन्त्रितस्य च' (६-१-१९८) इत्यामन्त्रितस्यादिरुदात्तो भवति। स ससुप्कस्य यथा स्यादित्येवमाद्यर्थोऽयमारम्भः। कुण्डे॑नाटन्। पर॑शुना वृश्चन्। मद्रा॑णां राजन्। कश्मी॑राणां राजन्। आद्युदात्तो जाते 'अनुदात्तं पदमेकवर्जम्' (६-१-१५८) इति शेषनिघाते 'उदात्तादनुदात्तस्य स्वरितः' (८-४-६६) इति स्वरितादेशः। 'स्वरितात्संहितायामनुदात्तानाम्' (१-२-३९) इत्येकश्रुतिः।

## प्राक्कडारात्समासः (२-१-३) -२।२।३८

प्राक्। कडारात्। समासः। 'कडाराः कर्मधारये' (२-२-३८) इति वक्ष्यति। प्राक् तस्माद्यानित ऊर्ध्वमनुक्रमिष्यामस्ते समाससंज्ञा वेदितव्याः। अधिकारसूत्रमेतत्। यथावृद्धं ब्राह्मणानामन्त्रयस्व। 'यथाऽसादृश्ये' (२-१-७) इति समासः। समासत्वे प्रयोजनं विभक्तिलुगैकस्वर्यमैकपद्यं च।

## सह सुपा (२-१-४) -२।२।३८

सहेति सुपेति चोभयमधिकृतं वेदितव्यं समानाधिकारे यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र। 'द्वितीया श्रितातीत०' (२-१-२४) इति द्वितीयान्तं श्रितादिसुबन्तेन सह समस्यते। कष्टं श्रितः कष्टश्रितः।

## अव्ययीभावः (२-१-५) -२।१।२१

यानित ऊर्ध्वमनुक्रमिष्यामोऽव्ययीभावसंज्ञास्ते वेदितव्याः। इदमप्यधिकारसूत्रम्। यथावृद्धं ब्राह्मणानामन्त्रयस्व। पूर्वोक्तसूत्रेणाव्ययीभावसमासः, स च पूर्वपदार्थप्रधानो भवति।

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्द-

## प्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्ति-साकल्यान्तवचनेषु(२-१-६ )

अव्ययम् । विभक्ति:………वचनेषु । विभक्तिश्च, समीपञ्च समृद्धिश्च, व्यृद्धिश्च, अर्थाभावश्च, अत्ययश्च, असंप्रति च, शब्द प्रादुर्भावश्च, पश्चाच्च, यथा च, आनुपूर्व्यं च, यौगपद्यं च, सादृश्यं च, सम्पत्तिश्च, साकल्यं च, अन्तश्च=विभक्ति………साकल्यान्ताः ( इ० द्व० ) ते वचनाश्च=विभक्ति……साकल्यावचनास्तेषु ( कर्मधारयः)। विभक्त्याद्यर्थेषु यदव्ययं वर्तते तत्समर्थेन सुबन्तेन सह समस्यते अव्ययीभावश्च समासो भवति । विभक्तिवचने-स्त्रीष्वधिकृत्य कथा प्रवर्तते अधिस्त्रि । अधिकुमारि । अत्र सप्तम्यर्थे यदव्ययमधिशब्दस्तद् विभक्ति वचनं[1] तस्य स्त्रीशब्देन सह समासे जाते स्त्री + सुप्-अधि + सु इत्यलौकिकविग्रहे, समासत्वात् 'कृत्तद्धितसमासाश्च' ( १-२-४६ ) इति प्रातिपदिकसंज्ञायां, 'सुपो धातुप्रातिपदिकयोः' ( २-४-७१ ) इति सुप् लुकि अधिशब्दस्य 'प्रथमानिर्दिष्टं समास उपसर्जनम्' ( १-२-४३ ) इत्युपसर्जनसंज्ञायाम्, 'उपसर्जनं पूर्वम्' ( २-२-३० ) इति पूर्वनिपाते अधिस्त्री इति जाते 'अव्ययीभावश्च' ( २-४-१८ ) इति नपुंसकत्वे, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' ( १-२-४७ ) इति ह्रस्वे 'अव्ययीभावश्च' (१-१-४१) इत्यव्ययसंज्ञायाम्, प्रथमैकवचने समागतस्य सुप्रत्ययस्य 'अव्ययादाप्सुपः' ( २-४-८२ ) इति लुकि 'अधिस्त्रि' इति पदरूपं निष्पन्नम् । एवम् अधिकुमारि इत्यादावपि बोध्यम् । समीपवचने-कुम्भस्य समीपम् उपकुम्भम् । उपमणिकम् । अत्र समीपवाचिन उपशब्दस्य कुम्भशब्देन सह समासे समासे कृतेऽव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सुलुक्प्राप्ते तदपवादः 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' (२-४-८३) इत्यमादेशः, 'अभिपूर्व

१—अधि-उप सु इत्यादिशब्दानां प्रादिषु पाठात् निपातसंज्ञा 'प्राग्रीश्वरान्निपाताः' इति तेषामेव 'स्वरादिनिपातमव्ययम्' इत्यव्ययसंज्ञा च भवति ।

(६-१-१०७) इति पूर्वरूपैकादेशे रूपम्। समृद्धिवचने ऋद्धेराधिक्यम्, समृद्धिर्मद्राणां। सुमद्रं, सुमगधं वर्तते। अत्र समृद्धिवचनः सुशब्दोऽव्ययम्। व्यृद्धिवचने ऋद्धेरभावो दुर्गवदिकम्। गवदिकानामृद्धेरभावः। व्यृद्धिवचनो दुर्-शब्दोऽव्ययम्। अर्थाभावःवस्तुनोऽभावः। मक्षिकाणामभावो निर्मक्षिकम्। निर्मशकं वर्तते। अत्ययः=भूतत्वम् अतिक्रमो वा। अतीतानि हिमानि निर्हिमम्, निःशीतत्वं वर्तते। उभयत्र 'निर्' शब्दोऽव्ययम्। असंप्रति=उपभोगस्य वर्तमानकालप्रतिषेधः। अतितैसृकम्। तिसृका नाम ग्रामस्तत्र भवमाच्छादनं तैसृकं तस्येदानीमुपभोगकालो नास्तीत्यर्थः। शब्दप्रादुर्भावः=शब्दस्य प्रकाशता। इतिपाणिनि, तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशते इत्यर्थः। तदर्थवचनौ इति-तत् छब्दावव्ययम्त्रये। पश्चात् अनुरथं पादातम्=रथानां पश्चात् इत्यर्थः। यथार्थः-रूपयोग्यं भवति अनुरूपम्, योग्यताऽत्र यथार्थः। शक्तिमनतिक्रम्य यथाशक्ति, पदार्थानतिवृत्तिरत्र यथार्थः। अर्थमर्थं प्रति प्रत्यर्थम्, वीप्साऽत्र यथार्थः। आनुपूर्व्यम्=अनुक्रमः। अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्येण भवन्तः प्रविशन्त्वित्यर्थः। यौगपद्यम्=एककालता। सचक्रं धेहि, युगपच्चक्रं धेहीत्यर्थः। युगपद्वचनस्य सहशब्दस्य चक्रशब्देन सह समासः। 'अव्ययीभावे चाकाले' (६-३-८१) इति सहस्य सभावः। सादृश्यम्=तुल्यता। सदृशः सख्या ससखि[२]। इहापि सदृशवाचिनः सहशब्दस्य पूर्ववत् सभावः। सम्पत्तिः=अनुरूप आत्मभावो न तु समृद्धिः। सब्रह्म बाभ्रवाणाम्, सक्षत्रं शालङ्कायनानाम्। तेषामनुरूपो ब्रह्म-(आत्म-) भावः', क्षत्रभाव इत्यर्थः। साकल्यम्=अशेषता। सतृणम भ्यवहरति, सबुसम्। न किञ्चिदभ्यवहार्यं परित्यजतीत्यर्थः। अन्तः=

२—सकिखि इति पाठान्तरः काशिकायाम्। किखी श्रृगालः तथाह्याह-अपचितपरिमाणः श्रृगालः किखी। अप्रसिद्धोदाहरणम्, चिरन्तनप्रयोगात्' (पदमञ्जरी २-१-६)।

समाप्तिः। साग्न्यधीते, सेष्टिपशुबन्धम्। अग्न्यन्तं पशुबन्धान्तम इत्यर्थः। साकल्यात् पृथग् ग्रहणमसकलेऽप्यध्ययने समाप्तिर्भव त्येवमर्थम्।

## यथाऽसादृश्ये (२-१-७)

यथा। असादृश्ये। न सादृश्यमसादृश्यं तस्मिन् (न० त० यथेत्येतदव्ययमसादृश्ये वर्त्तमानं सुपा सह समस्यते, अव्ययीभाव समासो भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धाः=यथावृद्ध यथाध्यापकम्। पूर्वसूत्रेणैव सिद्धे वचनं सादृश्यप्रतिषेधार्थम्।

## यावदवधारणे (२-१-८)

यावत्। अवधारणे। यावदित्येतदव्ययमवधारणे वर्त्तमानं सु सह समस्यते अव्ययीभावश्च समासो भवति। अवधारणमियत्त रिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व। यावदमत्राणि सम्भव पंच वा षड् वा तावत आमन्त्रयस्वेत्यर्थः।

## सुप्प्रतिना मात्रार्थे (२-१-९)

सुप्। प्रतिना। मात्रार्थे। मात्राया अर्थो मात्रार्थस्तस्मिन् (ष० त० स्तोकमल्पमित्यर्थः। मात्रार्थे वर्त्तमानेन प्रतिना सह सुबन्तं समस्य अव्ययीभावश्च समासो भवति। अस्त्यत्र किञ्चित् शाकम्, शाकप्र सूपप्रति। सुवित्यनुवर्त्तमाने पुनः सुब्ग्रहणमव्ययमित्येतस्य निवृत्त्यर्थ

## अक्षशलाकासंख्याः परिणा (२-१-१०)

अक्षश्च शलाका च संख्या च अक्षशलाकासंख्या (इ० द्व० अक्षशब्दः शलाकाशब्दः संख्यावाचिशब्दाश्च परिणा सह समस्य अव्ययीभावश्च समासो भवति। अक्षेणेदं न तथा वृत्तं यथा पूर्वं

अक्षपरि। शलाकापरि। एकपरि, द्विपरि, त्रिपरि, चतुष्परि। पञ्चिकानाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति। पंचसु एकरूपेषूत्तानेषु...त्सु जय एव भवति। यदा पुनरक्षादीनां विपरीतपातस्तदा पराजयस्तत्रार्थे समासोऽयमिष्यते।

## विभाषा[1] ( २-१-११ ) -२।२।२६

विभाषेत्यधिक्रियते 'चार्थे द्वन्द्वः' ( २-२-२९ ) इति यावत्।

## अपपरिबहिरञ्चवः पञ्चम्याः ( २-१-१२ )

अप च परि च बहिश्च अञ्चुश्च अपपरिबहिरञ्चवः ( इ० द्व० )। अप-परि-बहिस्-अञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अपत्रिगर्त्तं वृष्टो देवः, अप त्रिगर्त्तेभ्यः। परित्रिगर्त्तं परित्रिगर्त्तेभ्यः। बहिर्ग्रामम्, बहिर्ग्रामात्। प्राग्ग्रामम्, प्राग् ग्रामात्। 'पञ्चम्यपाङ्परिभिः' (२-३-१०) इति पञ्चमी भवत्यपपरियोगे। बहिश्शब्दयोगे त्वनेनैव पञ्चमी ज्ञापिता। अञ्चुशब्देनापि योगे 'अन्यारादितर्त्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' ( २-३-२९ ) इति पञ्चमी भवति।

## आङ् मर्यादाभिविध्योः ( २-१-१३ )

मर्यादा चाभिविधिश्च मर्यादाभिविधी, तयोः ( इ० द्व० )। आङित्येतन्मर्यादायामभिविधौ च वर्त्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। मर्यादायाम्-आपाटलिपुत्रं

---

१—"योगविभागः कर्त्तव्यः 'विभाषा' इत्ययमधिकारः, ततः 'अपपरिबहिरञ्चवः पञ्चम्याः' इति" ( महाभाष्यम् २-१-२-११ ) इति भाष्यकारप्रदर्शितयोगविभागेनैतद् विज्ञायते यत् सूत्रकारेणैकमेवेदं सूत्रं पठितम्-'विभाषाऽपपरिबहिरञ्चवः पञ्चम्याः' इति।

वृष्टो देवः, आपाटलिपुत्रात्। अभिविधौ-आकुमारं यशः पाणिनेः आ कुमारेभ्यः।

## लक्षणेनाभिप्रती आभिमुख्ये ( २-१-१४ )

लक्षणेन। अभिप्रती। आभिमुख्ये। अभिश्च प्रतिश्च अभिप्रती ( इ० द्व० )। अभिमुखस्य भाव आभिमुख्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (५-१-१२४) इति ष्यञ्। लक्षणं चिह्नं तद्वाचिना सुबन्तेन सह अभिप्रतिशब्दावाभिमुख्ये वर्त्तमानौ विभाषा समस्येतेऽव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निमभि। प्रत्यग्नि अग्निं प्रति। अग्निं लक्ष्यीकृत्याभिमुखं पतन्तीत्यर्थः।

## अनुर्यत्समया ( २-१-१५ )

अनुः। यत्समया। यस्य समया यत्समया ( ष० त० )। समया समीपम्। अनुर्यस्य समीपवाची तेन लक्षणभूतेन सह विभाषा समस्यते ऽव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः। वनस्य समीपमित्यर्थः। 'अव्ययं विभक्तिसमीप०' इत्येव सिद्धे पुनर्वचनं विभाषार्थम्।

## यस्य चायामः ( २-१-१६ )

यस्य। च। आयामः। आयामो दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी। अनुयमुनं मथुरा। गंगाऽऽयामेन वाराणस्यायामो यमुनाऽऽयामेन च मथुराऽऽयामो लक्ष्यते।

## तिष्ठद्गुप्रभृतीनि च (२-१-१७)

तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञानि भवन्ति। तिष्ठद्गु, वहद्गु, आयतीगवम्, खलेबुसम्, खलेयवम्। तिष्ठद्गवा

समुदाया एव निपात्यन्ते । तिष्ठद्गु कालविशेषः, तिष्ठन्ति गावो यस्मिन्-काले दोहनाय सः ।

## पारे मध्ये षष्ठ्या वा ( २-१-१८ )

पारे । मध्ये । षष्ठ्या । वा । पारमध्यशब्दौ षष्ठ्यन्तेन सह विकल्पेन समस्यतेऽव्ययीभावश्च समासो भवति । अव्ययीभावसमासेऽनयो रेकारान्तत्वं च निपात्यते । पारं गङ्गायाः=पारेगङ्गम् । मध्यं गङ्गायाः= मध्येगङ्गम् । वावचनात् षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते गङ्गापारं, गङ्गामध्यम् । महाविभाषया तु वाक्यविकल्पः क्रियते ।

## संख्या वंश्येन ( २-१-१९ ) -२०

. विद्यया जन्मना वा प्राणिनामेकलक्षणसन्तानो वंशस्तत्र भवो वंश्यः 'दिगादिभ्यो यत्' (४-३-५४) इति यत् । तद्वाचिना सुबन्तेन सह संख्यावाचि सुबन्तं समस्यते विकल्पेनाव्ययीभावश्च समासो भवति । द्वौ मुनी व्याकरणस्य वंश्यौ=द्विमुनि व्याकरणस्य, त्रिमुनि व्याकरणस्य । विद्यया तद्वतामभेदविवक्षायां सामानाधिकरण्यं भवति-द्विमुनि व्याकरणं, त्रिमुनि व्याकरणमिति । भारद्वाजस्यैकविंशतिर्वंश्या एकविंशति भारद्वाजम् ।

## नदीभिश्च ( २-१-२० ) -२१

नदीभिः । च । नदीवचनैः सह संख्यावाचि सुबन्तं समस्यते विभाषा-ऽव्ययीभावश्च समासो भवति । सप्तानां गङ्गानां समाहारः=सप्तगङ्गम् । द्वियमुनम्, पञ्चनदम्, सप्तगोदावरम् । बहुवचननिर्देशाद् 'यू स्त्र्याख्यौ नदी' ( १-४-३ ) इति कृत्रिमस्या ग्रहणं नास्ति, किं तर्हि ? अकृत्रिमस्या लौकिकनद्याः । समाहारार्थेऽत्र समासः ।

  

## अन्यपदार्थे च संज्ञायाम् ( २-१-२१ )

पदस्यार्थः पदार्थः ( ष० त० )। अन्यः पदार्थो यस्य सोऽन्यपदार्थस्तस्मिन् ( बहु० )। नदीभिः सह सुबन्तमन्यपदार्थे वर्त्तमानं संज्ञायां विषये समस्यतेऽव्ययीभावश्च समासो भवति। उन्मत्तगङ्गं नाम देशो यत्रोन्मत्ता गङ्गा। लोहितगङ्गम्, कृष्णगङ्गम्, शनैर्गङ्गम्। संज्ञायामितिवचनात् सत्यपि विभाषाधिकारे नित्यसमासोऽयं, नहि वाक्येन संज्ञा गम्यते।

## तत्पुरुषः ( २-१-२२ ) -२।२।२२

'तत्पुरुषः' इति संज्ञाधिक्रियते प्राक् 'शेषो बहुव्रीहिः' ( २-२-२३ ) इत्येतस्मात् सूत्रात्। इतोऽग्रे यः समासो भविष्यति तस्य तत्पुरुषसंज्ञा भविष्यति। पूर्वाचार्यसंज्ञेयं तदीयोपाधिपरिग्रहार्थम्-'उत्तरपदार्थप्रधानस्तत्पुरुषः' इति।

## द्विगुश्च ( २-१-२३ )

द्विगुः। च। 'संख्यापूर्वो द्विगुः' ( २-१-५२ ) इति यस्य द्विगुसंज्ञां वक्ष्यति स द्विगुसमासस्तत्पुरुषसंज्ञो भवति। पञ्चराजम्, दशराजम्। द्व्यहः, त्र्यहः। पञ्चगवम्, दशगवम्। पञ्चराजमिति पञ्चानां राज्ञां समाहार इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' ( २-१-५१ ) इति पञ्चानामिति सुबन्तस्य राज्ञामिति सुबन्तेन सह समाहारार्थे समासे द्विगुसंज्ञायां प्रकृतसूत्रेण तत्पुरुषसंज्ञायां 'राजाहः सखिभ्यष्टच्', ( ५-४-९१ ) इति समासान्ते टच्प्रत्यये लोपादिकार्ये 'द्विगुरेकवचनम्' ( २-४-१ ), 'स नपुंसकम्'( २-४-१७ ) इति नपुंसकलिंगे सौ विभक्तावुपपन्नं रूपम्। द्व्यहः, त्र्यहः इत्यत्र टच्प्रत्यये परतः अहन्शब्दस्य 'न संख्यादेः समाहारे' ( ५-४-८९ ) इत्यह्नादेशप्रतिषेधे अह्नष्टखोरेव (६-४-१४५) इति

टिलोपे 'रात्राह्नाहाः पुंसि' (२-४-२९) इति पुंलिंगनिर्देशात् सुविभक्तेः सकारस्य रुत्वविसर्गौ। पञ्चगवमित्यादौ 'गोरतद्धितलुकि' (५-४-९२) इति समासान्तष्टच् प्रत्ययः।

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (२-१-२४) -२६

श्रितश्च अतीतश्च पतितश्च गतश्च अत्यस्तश्च प्राप्तश्च आपन्नश्च श्रितातीत······प्राप्तापन्नास्तैः (इ० द्व०)। द्वितीयान्तं सुबन्तं श्रितादिना सुबन्तेन सह विभाषा समस्यते तत्पुरुषश्च समासो भवति। कष्टं श्रितः= कष्टश्रितः। नरकश्रितः। कान्तारमतीतः=कान्तारातीतः। नरकं पतितः= नरकपतितः। ग्रामं गतः=ग्रामगतः। तरङ्गानत्यस्तः (व्यतिक्रान्तः) तरङ्गात्यस्तः। तुहिनात्यस्तः। सुखं प्राप्तः=सुखप्राप्तः। सुखमापन्नः=सुखापन्नः। दुःखापन्नः। द्वितीयान्तानां कष्टादिशब्दानां सूत्रे प्रथमविभक्त्या निर्देशादुपसर्जनसंज्ञा ततश्च पूर्वनिपातः।

## स्वयं क्तेन (२-१-२५) -२८

स्वयम्। क्तेन। स्वयमित्यव्ययमात्मनेत्यर्थे वर्त्तते तत् क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। स्वयन्धौतौ पादौ। स्वयंविलीनमाज्यम्। ऐकपद्यैकस्वर्यें प्रयोजने। 'धौतौ' इति धावु=गतिशुद्धयोरिति धातोर्वकारस्य निष्ठायां 'च्छ्वोः शूडनुनासिके च' (६-४-१९) इत्यूठादेशे, 'एत्येधत्यूठ्सु' (६-१-८९) इति च वृद्धौ कृतायां पुंसि प्रथमा द्विवचने रूपम्।

## खट्वा क्षेपे (२-१-२६)

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह समस्यते क्षेपे (=निन्दार्थे) गम्यमाने, तत्पुरुषश्च समासो भवति। खट्वामारूढः=खट्वारूढो

जाल्मः[1]। खट्वाप्लुतः। विमार्गप्रस्थित इत्यर्थः। वाक्येन क्षेपो न गम्यते इत्ययं नित्यसमासः।

## सामि ( २-१-२७ )

सामीत्येतदव्ययं क्तान्तेन सह समस्यते तत्पुरुषश्च समासो भवति। सामिकृतम्। सामिभुक्तम्। सामिपीतम्। अर्द्धशब्दपर्यायः सामिशब्दः।

## कालाः ( २-१-२८ ) -२९

कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। षण्मुहूर्त्ताश्चराचराः। ते कदाचिदुत्तरायणेऽहर्गच्छन्ति कदाचिद्दक्षिणायने रात्रिम्। अहरतिसृता मुहूर्त्ताः=अहस्संक्रान्ताः। रात्र्यतिसृतामुहूर्त्ताः=रात्रिसंक्रान्ताः। क्रमोऽकारस्य 'अनुनासिकस्य क्विझलोः क्ङिति' (६-४-१५) इति दीर्घः। मासं प्रमातुमारब्धः=मासप्रमितश्चन्द्रमाः। माङ्=माने इति धातोः क्तप्रत्यये परतः 'द्यतिस्यतिमास्थामित्ति किति' (७-४-४०) इतीकारादेशः। उत्तरत्रात्यन्तसंयोगे इति वचनादनत्यन्तसंयोगार्थं वचनम्।

## अत्यन्तसंयोगे च ( २-१-२९ )

अत्यन्तश्चासौ संयोगः अत्यन्तसंयोगः ( कर्मधारयः ) कृत्स्नसंयोग इत्यर्थः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा तत्पुरुषश्च समासो भवति। मुहूर्त्तं सुखम्=मुहूर्त्तसुखम्। सर्वा रात्रिः कल्याणी=सर्वरात्रकल्याणी। सर्वरात्रशोभना। यावन्मुहूर्त्तं व्यतीतं तावत् सुखमेवेत्यर्थः।

---

१—"कः क्षेपो नाम? अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वाऽऽरोढव्या। य इदानीमतोऽन्यथा करोति, स उच्यते खट्वारूढोऽयं जाल्मः" (महाभाष्यम् २-१-२।२५)।

## तृतीया तत्कृतार्थेन गुणवचनेन ( २-१-३० ) -३५

तृतीया । तत्कृतार्थेन । गुणवचनेन । तेन कृतं तत्कृतम् ( तृ० त० ) । तत्कृतं चार्थश्च तत्कृतार्थं तेन ( स० द्व० ) । यद्वा तत्कृतेति तृतीयायाश्छान्दसो लुक्, अर्थेनेति पृथक्पदम्[1] । गुणमुक्तवान् गुणवचनस्तेन ( उपपदसमासः ) । तृतीयान्तं सुबन्तं तत्कृतेन तृतीयान्तार्थकृतेन गुणवचनेनार्थशब्देन च सह समस्यते विभाषा तत्पुरुषश्च समासो भवति । शङ्कुलया खण्डः=शङ्कुलाखण्डः । किरिणा काणः=किरिकाणः । धान्येनार्थः=धान्यार्थः ।

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ( २-१-३१ )

ऊनोऽर्थो यस्य स ऊनार्थः ( बहु० ) । पूर्वश्च सदृशश्च समश्च ऊनार्थश्च कलहश्च निपुणश्च मिश्रश्च श्लक्ष्णश्च=पूर्व......श्लक्ष्णास्तैः ( इ० द्व० ) । पूर्वादिभिः सह तृतीयान्तं समस्यते विभाषा तत्पुरुषश्च समासो भवति । मासेन पूर्वः=मासपूर्वः । संवत्सरपूर्वः । मात्रा सदृशः=मातृसदृशः । पितृसदृशः । मात्रा समः=मातृसमः । पितृसमः । माषेणोनम्=माषोनम् । कार्षापणोनम् । माषेन विकलम्=माषविकलम् । कार्षापणविकलम् । असिना कलहः=असिकलहः । वाक्कलहः । वाचा निपुणः=वाग्निपुणः । आचारनिपुणः । गुडेन मिश्रः=गुडमिश्रः । तिलमिश्रः । आचारेण श्लक्ष्णः=आचारश्लक्ष्णः ।

## कर्तृकरणे कृता बहुलम् ( २-१-३२ ) -३६

कर्त्ता च करणं च=कर्तृकरणं तस्मिन् ( स० द्व० ) । कर्त्तरि करणे च

[1]—"नायमर्थनिर्देशः । किं तर्हि ? योगाङ्गमिदं निर्दिश्यते । सैति च योगाङ्गे योगविभागः करिष्यते-"तृतीया तत्कृतेन गुणवचनेन" समस्यते । ततः-"अर्थेन" अर्थशब्देन च तृतीया समस्यते । धान्यार्थः, वसनार्थः, हिरण्यार्थः । ( महाभाष्यम्-२-१-२-२९ ) ।

या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलं तत्पुरुषश्च समासो भवति। बहूनर्थान् लातीति बहुलम्[२]। अन्वर्थसंज्ञैषा। कर्त्तरि-अहिना हृतः=अहिहृतः। करणे-नखैर्निर्भिन्नो नखनिर्भिन्नः। परशुना छिन्नः=परशुच्छिन्नः। सर्वोपाधिव्यभिचारार्थम् अव्याप्त्यतिव्याप्तिपरिहारार्थं च बहुलग्रहणम्।

## कृत्यैरधिकार्थवचने (२-२-३३)

कृत्यैः। अधिकार्थवचने। अर्थस्य वचनमर्थवचनम् (ष० त०), अधिकं च तदर्थवचनमधिकार्थवचनं (पदार्थस्यातिस्तुतिनिन्दावचनम्) तस्मिन् (कर्मधारयः)। कर्त्तृकरणयोर्या तृतीया तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति। कर्त्तरि-काकेन पेया=काकपेया नदी। शुना लेह्यः=श्वलेह्यः कूपः। करणे-वाष्पैश्छेद्यानि=वाष्पच्छेद्यानि तृणानि। कण्टकेन संचेयः=कण्टकसंचेय ओदनः। कृत्यानां कृदन्तर्गतत्वात् पूर्वेणैव सिद्धेऽत्र कृत्यग्रहणं बहुलनिवृत्त्यर्थम्।

## अन्नेन व्यञ्जनम् (२-१-३४)

व्यञ्जनवाचि तृतीयान्तमन्नवाचिना तृतीयान्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। दध्ना उपसिक्त ओदनः=दध्योदनः। क्षीरौदनः। संस्कार्यमन्नं संस्कारकं व्यञ्जनम्।

## भक्ष्येण मिश्रीकरणम् (२-१-३५)

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन सह समस्यते

२—क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥ इति बहुल-लक्षणमाहुः।

तत्पुरुषश्च समासो भवति। गुडेन मिश्रा धानाः=गुडधानाः। गुडपृथुकाः[1]। हनुचलनेनादनीयं खरविशदं (कठिनं विभक्तावयवं च) भक्ष्यमिहोच्यते।

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (२-१-३६)

तस्मै इदम्=तदर्थम् (च० त०)। तदर्थं चार्थश्च बलिश्च हितञ्च सुखञ्च रक्षितञ्च तदर्थार्थबलिहितसुखरक्षितानि, तैः (इ० द्व०)। चतुर्थ्यन्तं तदर्थ-अर्थ-बलि-हित सुख-रक्षित-इत्येतैः सह समस्यते विभाषा तत्पुरुषश्च समासो भवति। तदर्थमिति प्रकृतिविकारभावे समासोऽयमिष्यते। यूपाय दारु=यूपदारु। कुण्डलाय हिरण्यम्=कुण्डलहिरण्यम्। 'अर्थेन सह नित्यसमासर्वचनं सर्वलिङ्गता चे' ति वार्त्तिकप्रामाण्याद् वाक्यं न भवति। ब्राह्मणार्थं पयः, ब्राह्मणार्था यवागूः। कुबेराय बलिः=कुबेरबलिः। महाराजबलिः। गवे हितम्=गोहितम्। अश्वहितम्। गवे सुखम्=गोसुखम्। अश्वसुखम्। गवे रक्षितम्=गोरक्षितम्। अश्वरक्षितम्।

## पञ्चमी भयेन (२-१-३७) -३८

पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा तत्पुरुषश्च समासो भवति। वृकेभ्यो भयं=वृकभयम्। चौरभयम्। दस्युभयम्।

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः (२-१-३८)

अपेतापोढमुक्तपतितापत्रस्तैः। अल्पशः। अपेतश्च अपोढश्च मुक्तश्च पतितश्च अपत्रस्तश्च=अपेतापोढमुक्तपतितापत्रस्तास्तैः (इ०

---

१—'पृथुकाः' भृष्टाः कुट्टिता धानाः, अद्यत्वे 'च्यूड़ा' इति नाम्ना भाषायां प्रसिद्धाः।

द्व०)। पञ्चम्यन्तमपेतादिभिः सह विभाषा समस्यते तत्पुरुषश्च समासो भवति। सुखादपेतः=सुखापेतः। कल्पनाया अपोढः=कल्पनापोढः। चक्रान्मुक्तः=चक्रमुक्तः। स्वर्गात् पतितः=स्वर्गपतितः। तरङ्गादपत्रस्तः=तरङ्गापत्रस्तः। 'अल्पशः' इत्यल्पाभ्यः प्रकृतिभ्य उत्पन्ना पञ्चमीत्यर्थः।

## स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ( २-१-३९ )

स्तोकं चान्तिकं च दूरं च=स्तोकान्तिकदूराणि तान्यर्था येषां ते स्तोकान्तिकदूरार्थाः ( द्वन्द्वगर्भो बहु० )। स्तोकान्तिकदूरार्थाश्च कृच्छ्रं च=स्तोकान्तिकदूरार्थकृच्छ्राणि ( इ० द्व० ) स्तोक-अन्तिक-दूर-इत्यर्थकाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते विभाषा तत्पुरुषश्च समासो भवति। स्तोकात् मुक्तः=स्तोकान्मुक्तः। अन्तिकात् आगतः=अन्तिकादागतः। अभ्यासादागतः। दूरात् आगतः=दूरादागतः। कृच्छ्रात् मुक्तः=कृच्छ्रान्मुक्तः। कृच्छ्राल्लब्धः। 'पञ्चम्याः स्तोकादिभ्यः' ( ६-३-२ ) इति विभक्त्यलुक्।

## सप्तमी शौण्डैः ( २-१-४० ) -४७

सप्तम्यन्तं शौण्डैः (अर्थात् शौण्डादिभिः) सह समस्यते तत्पुरुषश्च समासो भवति। अक्षेषु शौण्डः=अक्षशौण्डः। अक्षधूर्तः। अक्षकितवः।

## सिद्धशुष्कपक्वबन्धैश्च ( २-१-४१ )

सिद्धशुष्कपक्वबन्धैः। च। सिद्धश्च शुष्कश्च पक्वश्च बन्धश्च सिद्धशुष्कपक्वबन्धाः, तैः ( इ० द्व० )। सिद्धादिभिः सह सप्तम्यन्तं समस्यते विभाषा तत्पुरुषश्च समासो भवति। सांकाश्ये सिद्धः=सांकाश्यसिद्धः। काम्पिल्यसिद्धः। आतपे शुष्कः=आतपशुष्कः। छायाशुष्कः। स्थाल्यां पक्वः=स्थालीपक्वः। कुम्भीपक्वः। चक्रे बन्धः=चक्रबन्धः। 'शुषः कः'

( ८-३-५१ ), 'पचो वः' ( ८-३-५२ ) इति निष्ठातकारस्य कत्ववत्वयोः कृतयोः शुष्कः, पक्वः इति शब्दौ साधू।

## ध्वाङ्क्षेण क्षेपे ( २-१-४२ )

ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते तत्पुरुषश्च समासो भवति। तीर्थे ध्वाङ्क्ष इव=तीर्थध्वाङ्क्षः। तीर्थकाकः। तीर्थवायसः। अनवस्थितः इत्यर्थः। यथा तीर्थकाका न चिरं स्थातारो भवन्ति एवं योऽसौ गुरुकुलानि गत्वा चिरं न तिष्ठति स 'तीर्थकाकः' इत्यादि पदेन निन्द्यते।

## कृत्यैर्ऋणे ( २-१-४३ )

कृत्यैः। ऋणे। कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते विभाषा, तत्पुरुषश्च समासो भवति। मासे देयमृणं=मासदेयम्। संवत्सरदेयम्। त्र्यहदेयम्। 'अल्पशः' इत्यस्य मण्डूकप्लुत्यानुवर्त्तनाद् यत्प्रत्ययान्तेनैवायं समासः।

## संज्ञायाम् ( २-१-४४ )

संज्ञायां विषये सप्तम्यन्तं सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। समुदायोपाधित्वात् संज्ञाया नित्यं समासो भवति। अरण्येतिलकाः, अरण्येमाषाः, वनेकिंशुकाः वनेबिल्वकाः, कूपेपिशाचकाः। 'हलदन्तात्सप्तम्याः संज्ञायाम्' ( ६-३-९ ) इति सप्तम्यलुक्।

## क्तेनाहोरात्रावयवाः ( २-१-४५ )

-४७

क्तेन। अहोरात्रावयवाः। अहश्च रात्रिश्च अहोरात्रौ तयोरवयवा अहोरात्रावयवाः ( द्वन्द्वगर्भषष्ठीतत्पुरुषः )। अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते विभाषा तत्पुरुषश्च समासो भवति। पूर्वाह्णे कृतम्=पूर्वाह्णकृतम्। अपराह्णकृतम्। पूर्वरात्रकृतम्। अपररात्र-

  

कृतम् । अहोरात्राविति द्वन्द्वस्य, पूर्वरात्रे कृतम्-इत्यादि तत्पुरुषस्यचान्ते 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' (५-४ ८७) इत्यच्प्रत्ययो, भस्येकारलोपो, 'रात्राह्नाहाः पुंसि' ( २-४-२९ ) इति पुंस्त्वं च भवति ।

## तत्र ( २-१-४६ )

तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन सह विभाषा समस्यते, तत्पुरुषश्च समासो भवति । तत्रभुक्तम्, तत्रकृतम् । तत्रपीतम् ।

## क्षेपे ( २-१-४७ ) -४८

क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह विभाषा समस्यते तत्पुरुषश्च समासो भवति । अवतप्तेनकुलस्थितं तवैतत् । अनवस्थितत्वं तवैतदित्यर्थः । उदकेविशीर्णम् । प्रवाहेमूत्रितम्, भस्मनिहुतम् । निष्फलं यत्क्रियते तदेवमुच्यते । 'तत्पुरुषे कृति बहुलम्' ( ६-३-१४ ) इति सप्तम्यलुक् ।

## पात्रेसंमितादयश्च ( २-१-४८ )

पात्रेसंमित आदिर्येषां ते पात्रेसंमितादयः[1] । ( बहु० ) । पात्रेसंमितादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति, क्षेपे गम्यमाने । समुदाया एव निपात्यन्ते । पात्रेसंमिताः । पात्रेबहुलाः । उदरक्रिमिः, कूपकच्छपः । पात्रे एव संमिता ये भवन्ति न पुनः क्वचित् कार्य्ये त एवमुच्यन्ते ।

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ( २-१-४९ ) -७२

पूर्वः कालो यस्य स पूर्वकालः ( बहु० ) । पूर्वानुष्ठित इत्यर्थः । पूर्व.........केवलाः इतीतरेतरद्वन्द्वः । समानमधिकरणं यस्य तत् समा-

१—'पात्रेसमितादयश्च' इति पाठान्तरमत्र ।

नाधिकरणं तेन (बहु०)। द्वयोर्बहूनां वा समर्थपदानामेकस्मिन्नर्थे प्रवृत्तिः सामानाधिकरण्यम्। पूर्वकाल-एक-सर्व-जरत्-पुराण-नव-केवल-इत्येते सुबन्ताः समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वकालोऽपरकालेन सह समस्यते। स्नातश्चानुलिप्तश्चेति स्नातानुलिप्तः। कृष्टसमीकृतम्। दग्धप्ररूढम्। एकशाटी, एकभिक्षा। सर्वदेवाः, सर्वमनुष्याः। जरद्धस्ती, जरद्गृष्टिः, जरद्वृत्तिः। पुराणान्नम्, पुराणावसथम्। नवान्नम्। नवावसथम्। केवलान्नम्। 'विशेषणं विशेष्येण बहुलम्' (२-१-५७) इत्यस्यायमपवादो बहुलनिवृत्त्यर्थो नियमार्थश्च।

## दिक्संख्ये संज्ञायाम् (२-१-५०)

दिक् च संख्या च दिक्संख्ये (इ० द्व०)। दिग्वाचिनः शब्दाः संख्यावाचिनश्च समानाधिकरणेन सह समस्यन्ते तत्पुरुषश्च समासो भवति। पूर्वा चासाविषुकामशमी च=पूर्वेषुकामशमी। 'अपरेषुकामशमी। पञ्च ते आम्राश्च च=पञ्चाम्राः। सप्तर्षयः।

## तद्धितार्थोत्तरपदसमाहारे च (२-१-५१)

तद्धितस्यार्थः (=उत्पत्तिविषयः) तद्धितार्थः (ष० त०)। उत्तरं च तत् पदंचोत्तरपदम् (कर्मधारयः)। तद्धितार्थश्च उत्तरपदञ्च समाहारश्च=तद्धितार्थोत्तरपदसमाहारं तस्मिन् (स०द्व०)। तद्धितार्थे विषये, उत्तरपदे च परतः, समाहारे चाऽभिधेये दिक्संख्ये समानाधिकरणेन सुबन्तेन सह समस्येते, तत्पुरुषश्च समासो भवति। तद्धितार्थे—पूर्वस्यां शालायां भवः पौर्वशालः। 'दिक्पूर्वपदादसंज्ञायां ञः' (४-२-१०७) इति, ञप्रत्यये, आदिवृद्धौ, आकारलोपे, पुंवद्भावे च रूपम्। उत्तरपदे-पूर्वशालाप्रियः। अपरशालाप्रियः। पञ्चगवधनः, दशगवधनः। पूर्वशाला प्रियाऽस्येति

  

विग्रहे 'अनेकमन्यपदार्थे' (२-२-२४) इति बहुव्रीहि समासे 'सुपोधातुप्रातिपदिकयो': (२-४-७१) इति सुप्लुकि प्रियाशब्दे उत्तरपदे परतः पूर्वशाला इत्येतस्य प्रकृतसूत्रेण तत्पुरुषसंज्ञायां 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु' (६-३-३४)। (६-३-२४) इतिपूर्वाशब्दस्य पुंवद्भावे, 'गोस्त्रियोरुपसर्जनस्य' (१-२-४८) इति प्रियाशब्दस्य ह्रस्वत्वे स्वरे कर्त्तव्ये 'समासस्य' (६-१-२१७) इति पूर्वशालाशब्दस्यान्तोदात्तत्वे शेषानुदात्ते स्वरितत्वे 'स्वरितात् संहितायामनुदात्तानाम्' (१-२-३९) इत्येकश्रुतौ च 'पूर्वशालाप्रियः' 'अपरशालाप्रियः' इत्येष स्वर उपपन्नः। पञ्च गावो धनमस्येति विग्रहे पूर्ववत् समासकार्ये 'गोरतद्धितलुकि' (५-४-९२) इति समासान्ते टच्प्रत्यये 'पञ्चगवधन' इत्येषस्वर उपपन्नः। समाहारे-पञ्चपूली, दशपूली, पञ्चकुमारि, दशकुमारि। पञ्चानां पूलानां समाहारः इतिविग्रहे प्रकृतसूत्रेण तत्पुरुषसमासे तस्य द्विगुसंज्ञायाम् 'अकारान्तोतरपदोद्विगुः स्त्रियां भाष्यते' (वा०२-४-१७) इति वार्त्तिकात् स्त्रीलिंगे 'द्विगोः' (४-१-२१) इतिङीपि सिद्धं पञ्चपूलीति। पञ्चकुमारि इत्यादौ तु 'द्विगुरेकवचनम्' (२-४-१) 'स नपुंसकम्' (२-४-१७) इत्येकवचननपुंसकत्वे कृते 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१-२-४७) इति ह्रस्वो विशेषः।

## संख्यापूर्वो द्विगुः (२-१-५२)

संख्यापूर्वः। द्विगुः। 'संख्या पूर्वा यस्य स संख्यापूर्वः' (बहु०)। अनुक्रान्तसूत्रे संख्यापूर्वो यः समासः स द्विगुसंज्ञो भवति। तद्धितार्थे-पंचसु कपालेषु संस्कृतः पञ्चकपालः, दशकपालः,। संस्कृतं भक्षाः (४-२-१६) इत्यणप्रत्ययो 'द्विगोर्लुगनपत्ये' (४-२-८८) इति तस्य लुक्। उत्तरपदे-पञ्चनाव्नः प्रिया अस्य=पञ्चनावप्रियः। 'नावो द्विगोः' (५-४-९९) इति समासान्तो टच्प्रत्ययः। समाहारे-पंचानां पूलानां समाहार= पंचपूली।

## कुत्सितानि कुत्सनैः ( २-१-५३ )

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते तत्पुरुषश्च समासो भवति । 'विशेषणं विशेष्येण बहुलम्' ( २-१-५७ ) इति विशेष्यस्य परनिपाते प्राप्ते पूर्वनिपातार्थं आरम्भः । 'वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः=निष्प्रभ इत्यर्थः । याज्ञिककितवः=अयाज्ययाजनतृष्णापरः । मीमांसकदुर्दुरूढः=नास्तिक इत्यर्थः ।

## पापाणके कुत्सितैः ( २-१-५४ )

पापं चाणकं च पापाणके (इ० द्व०) । पापाणकशब्दौ कुत्सितवचनैः सह समस्येते तत्पुरुषश्च समासो भवति । पापनापितः, पापकुलालः । अणकनापितः, अणककुलालः । कुत्सनाभिधायिनावेतौ, पूर्वेण परनिपाते प्राप्ते पूर्वनिपातार्थमिदं सूत्रम् ।

## उपमानानि सामान्यवचनैः ( २-१-५५ )

सामान्यमुक्तवन्तः सामान्यवचनास्तैः ( उपपद-तत्पुरुष-समासः ) 'उपमीयतेऽनेनेत्युपमानम्, 'करणाधिकरणयोश्च' ( ३-३-११७ ) इतिल्युट् प्रत्ययः । उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता । कुमुदश्येनी, हंसगद्गदा, न्यग्रोधपरिमण्डला ।

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ( २-१-५६ )

व्याघ्र आदिर्येषां ते व्याघ्रादय तैः ( बहु० ) । समानेषु भवं सामान्यम् ( साधरणधर्मः ) । न प्रयोगीऽप्रयोगः ( न० त० ) । सामान्यस्य अप्रयोगः सामान्याप्रयोगस्तस्मिन् ( ष० त० ) । उपमेयमेवोपमितम्,

  

तद्वाचिसुबन्तं व्याघ्रादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत् सामान्यवाची शब्दः प्रयुज्यते। पुरुषोऽयं व्याघ्रइव=पुरुषव्याघ्रः। पुरुषसिंहः। पुरुष उपमितम्, व्याघ्रसिंहौ उपमाने, सामान्यं शूरत्वं तस्याप्रयोगः। पूर्वसूत्रस्यायमपवादो विशेष्यस्योपमितस्य ( उपमेयस्य ) पूर्वनिपातार्थः।

## विशेषणं विशेष्येण बहुलम् ( २-१-५७ )

भेदकं विशेषणं भेद्यं विशेष्यम्। विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति। नीलं च तदुत्पलं च=नीलोत्पलम्, रक्तोत्पलम्। बहुलग्रहणात् क्वचिद्विकल्पः-नीलमुत्पलम्; क्वचिन्नित्यसमासः-कृष्णसर्पः, लोहितशालिः; क्वचित् समासाऽभावः-रामो जामदग्न्यः, अर्जुनः कार्त्तवीर्यः।

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ( २-१-५८ )

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराः। च। 'पूर्व....वीराः' इत्यत्रेतरेतरद्वन्द्वसमासः। पूर्व-अपर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यमवीर-इत्येते शब्दाः-समानाधिकरणेन सुबन्तेन सह समस्यन्ते तत्पुरुषश्च समासो भवति। पूर्वपुरुषः, अपरपुरुषः, प्रथमपुरुषः, चरमपुरुषः, जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः, मध्यमपुरुषः, वीरपुरुषः। पूर्वेणैवसिद्धे सूत्रं बहुलनिवृत्त्यर्थम्।

## श्रेण्यादयः कृतादिभिः ( २-१-५९ )

श्रेणिरादिर्येषां ते श्रेण्यादयः, कृत आदिर्येषां ते कृतादयः ( उभयत्र बहुव्रीहिः )। श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः समस्यन्ते तत्पुरुषश्च समासो भवति। श्रेणिकृताः, एककृताः, पूगकृताः, कुण्ड-

कृताः, राशिकृताः'। 'श्रेण्यादिषु च्व्यर्थवचनम्' इतिवार्तिकेन च्व्यर्थानामयं समास इष्यते-अश्रेणयः श्रेणयः कृताः=श्रेणिकृताः इति। च्व्यन्तानां तु 'कुगतिप्रादयः' (२-२-१८) इति नित्यसमासो भवति-श्रेणीकृताः इति।

## क्तेन नञ्विशिष्टेनानञ् ( २-१-६० )

क्तेन। नञ्विशिष्टेन। अनञ्। नञ् विशिष्टो यस्मिन् स नञ्विशिष्टस्तेन (बहु०) नास्ति नञ् यस्मिन् सोऽनञ् (बहु०) क्तान्तः। नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सहानञ् क्तान्तं समस्यते तत्पुरुषश्च समासो भवति। कृतं च तदकृतं च कृताकृतम्। भुक्ताभुक्तम्, पीतापीतम्, उदितानुदितम, अशितानशितेन जीवति, क्लिष्टाक्लिशितेन वर्त्तते।

## सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ( २-१-६१ )

सच्च, महच्च, परमश्च, उत्तमश्च, उत्कृष्टश्च=सन्महत्परमोत्कृष्टाः (इ० द्व०)। 'सत्' इत्येवमादयः सुबन्ताः (पूजासाधनाः) पूज्यमानैः सुबन्तैः सह समस्यन्ते तत्पुरुषश्च समासो भवति। सन्नासौ पुरुषश्च सत्पुरुषः, महापुरुषः, परमपुरुषः, उत्कृष्टपुरुषः। 'आन्महतः समानाधिकरणजातीययोः' (६-३-४६) इति महत आकारादेशः।

## वृन्दारकनागकुञ्जरैः पूज्यमानम् ( २-१-६२ )

वृन्दारकश्च नागश्च कुञ्जरश्च वृन्दारकनागकुञ्जरास्तैः (इ० द्व०)। वृन्दारकनागकुञ्जरैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। गौश्चासौ वृन्दारकश्च=गोवृन्दारकः। अश्ववृन्दारकः, अश्वनागः, गोकुञ्जरः, अश्वकुञ्जरः। पूर्वस्यापवादोऽयं योगः पूज्यमानस्य पूर्वनिपातार्थम्।

## कतरकतमौ जातिपरिप्रश्ने ( २-१-६३ )

कतरश्च कतमश्च कतरकतमौ (इ० द्व०)। जातेः परिप्रश्नः जाति-

षरिप्रश्नस्तस्मिन् (ष० त०) कतरकतमौ जातिपरिप्रश्ने वर्त्तमानौ सुबन्तेन सह समस्येते, तत्पुरुषश्च समासो भवति। कतरः कठः=कतरकठः। कतरकलापः, कतमकठः, कतमकलापः।

## किं क्षेपे (२-१-६४)

किम्। क्षेपे। किमित्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। किंराजा यो न रक्षति, किंसखा योऽभिद्रुह्यति। किं गौर्यो न वहति। 'किमः क्षेपे' (५-४-७०) इति समासान्तप्रत्ययो न भवति।

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः (२-१-६५) -६६

पोटा······धूर्तैः इत्यत्रेतरेतरद्वन्द्वसमासः। पोटा-युवती-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयणी-प्रवक्तृ-श्रोत्रिय-अध्यापक-धूर्तशब्दैः सह जातिवाचि सुबन्तं समस्यते तत्पुरुषश्च समासो भवति, इभा चासौ पोटा=इभपोटा[1]। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। गोगृष्टिः। गोधेनुः। गोवशा। गोवेहद्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः। स्त्रीपुंसो उभयव्यंजना, अल्पावस्था पोटेत्यभिधीयते। गृष्टिरेकवारप्रसूता। धेनुः प्रत्यग्रप्रसूता। वशा वन्ध्या। वेहद् गर्भपातिनी। बष्कयणी तरुणवत्सा।

## प्रशंसावचनैश्च (२-१-६६)

प्रशंसावचनैः। च। प्रशंसाया वचनानि प्रशंसावचनानि तैः (ष० त०)।

---

१—"पोटाशब्दस्तु तत्रापि स्त्रीत्वयुक्तः प्रवर्तते।
शब्दानां चित्र शक्तित्वात् षण्डशब्दो यथा पुमान्॥ (पदमंजरी)
इति शिष्टप्रयोगात् सत्यपि स्त्रीलिंगे पोटाशब्दो नपुंसकार्थवाचकः।

जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति। शोभनः प्रशस्तो गौः-गोप्रकांडम्। अश्वप्रकांडम्। गोमतल्लिका, अश्वमतल्लिका। गोमचर्चिका, अश्वमचर्चिका।

## युवा खलतिपलितवलिनजरतीभिः ( २-१-६७ )

खलतिश्च पलितश्च वलिनश्च जरती च खलतिपलितवलिनजरत्यस्ताभिः (इ० द्व०)। युवशब्दः खलत्यादिभिः समानाधिकरणैः सह/युवतिः समस्यते तत्पुरुषश्च समासो भवति। युवाखलतिः=युवखलतिः। खलती=युवखलती। युवा=पलितः=युवपलितः। युवतिः पलिता=युवपलिता। युवा पलिनः=युवपलिनः। युवतिः पलिना=युवपलिना। युवा जरन्=युवजरन्। युवतिर्जरती=युवजरती। युवेति पुलिंगशब्देन सह जरतीभिरिति स्त्रीलिंगनिर्देशो ज्ञापनार्थः-"प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणम्" इति परिभाषा भवतीति। तत्र यदा युवा चासौ खलतिश्चेति विग्रहस्तदा समासस्य प्रातिपदिकसंज्ञत्वात् सुप्लुकि नकारलोपो भवति। यदा तु युवतिश्चासौ खलतिश्चेति तदा 'पुंवत् कर्मधारयजातीयदेशीयेषु' ( ६-३-४० ) इति पूर्वपदस्य पुंवद्भावः, नकारलोपः, 'कृदिकारादक्तिनः' ( वा० ४-१-४५ ) इति ङीष्, भसंज्ञस्येकारलोपश्च।

## कृत्यतुल्याख्या अजात्या ( २-१-६८ )

कृत्यतुल्याख्याः। अजात्या। तुल्यस्याख्या ( पर्य्यायः )=तुल्याख्या ( ष० त० )। कृत्याश्च तुल्याख्याश्च कृत्यतुल्याख्याः ( इ० द्व० )। न जातिरजातिस्तया ( न० त० )। कृत्यप्रत्ययान्ताः तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। कृत्याः-भोज्योष्णम्, भोज्यलवणम्, पानीयशीतम्। 'कृत्याः' ( ३-१-९५ ) इत्यधिकाराद् ण्यदनीयरौ कृत्यौ। तुल्याख्याः-तुल्यश्वेतः, तुल्यमहान्, सदृशश्वेतः, सदृशमहान्।

## वर्णो वर्णेन ( २-१-६९ )

वर्णः । वर्णेन । वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति । कृष्णश्चासौ सारङ्गश्च=कृष्णसारङ्गः । कृष्णशबलः, लोहितसारङ्गः, लोहितशबलः । एकोऽवयवशब्दोऽपरः समुदायशब्दस्तत्रावयवस्याप्रधानत्वादुपसर्जनत्वात् पूर्वनिपातो भवति ।

## कुमारः श्रमणादिभिः ( २-१-७० )

श्रमण आदिर्येषां ते श्रमणादयस्तैः ( बहु० ) । कुमारशब्दः श्रमणादिभिः सह समस्यते तत्पुरुषश्च समासो भवति । कुमारश्चासावध्यापकश्च=कुमाराध्यापकः । कुमाराभिरूपकः, कुमारपण्डितः, कुमारपटुः । कुमारी चासावध्यापिका च=कुमाराध्यापिका । कुमारश्रमणा, कुमारप्रव्रजिता, कुमारकुलटा । गणपाठे स्त्रीलिंगपठितश्रमणप्रव्रजितादिशब्दैः स्त्रीलिंगएव कुमारशब्दः समस्यते । ये तु पुलिंगा अध्यापकोऽभिरूपक इत्यादयस्तैः सहोभयथा-पुँलिंगः स्त्रीलिंगश्च-कुमारशब्दः समस्यते । 'प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमिति परिभाषया ।

## चतुष्पादो गर्भिण्या ( २-१-७१ )

चतुष्पादः । गर्भिण्याः । चत्वारः पादा यासां ताश्चतुष्पादः (बहु०) । 'पादस्य लोपोऽहस्त्यादिभ्यः', 'संख्या सूपूर्वस्य' ( ५-४-१३८।१४० ) इत्यन्तस्यलोपः । चतुष्पात्वाचिनः शब्दाः गर्भिणीशब्देन सह समस्यन्ते तत्पुरुषश्च समासोभवति । गौश्चासौ गर्भिणी=गोगर्भिणी । अजागर्भिणी ।

## मयूरव्यंसकादयश्च ( २-१-७२ )

मयूरव्यंसकादयः । च । मयूरव्यंसक आदिर्येषां ते मयूरव्यंसकादयः

( बहु० ) । मयूरव्यंसक इत्येवमादयः शब्दाः कृतसमासास्तत्पुरुषसंज्ञका भवन्ति । चकारोऽवधारणार्थः परमो मयूरव्यंसक इत्यत्र समासान्तरो माभूदिति । मयूरव्यंसकः । छात्रव्यंसकः । काम्बोजमुण्डः । यवनमुण्डः । हस्तेगृह्यः । पादेगृह्यः । लाङ्गलेगृह्यः । व्यंसकश्चतुरो धूर्तो वा तस्य गुणवचनत्वात् पूर्वनिपाते प्राप्ते परनिपातार्थः पाठः ।

इति द्वितीयाध्यायस्य प्रथमः पादः ।

—:०:—

# अथ द्वितीयाध्यायस्य द्वितीयः पादः

## पूर्वाऽपराऽधरोत्तरमेकदेशिनैकाधिकरणे ( २-२-१ ) -३

पूर्वाऽपराऽधरोत्तरम् । एकदेशिना । एकाधिकरणे । पूर्वश्चापरश्चाधरश्चोत्तरश्च=पूर्वापराधरोत्तरम् ( स० द्व० ) । एकश्चासौ देशश्च एकदेशः ( कर्मधारयतत्पुरुषः ) । एकदेशोऽस्यास्तीति एकदेशी तेन=अवयविनेत्यर्थः । 'अत इनिठनौ' ( ५-२-११५ ) इति इनिप्रत्ययः । एकं च तदधिकरणम् एकाधिकरणं तस्मिन् (कर्मधारयः) । एकदेशवाचिना सुबन्तेन सह पूर्वापराधरोत्तरशब्दाः ( एकदेशवचनाः ) समस्यन्ते एकाधिकरणे तत्पुरुषश्च समासो भवति । पूर्वं कायस्य=पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । षष्ठीसमासाऽपवादोऽयं योगः ।

## अर्द्धं नपुंसकम् ( २-२-२ )

अर्द्धम् । नपुंसकम् । समप्रविभागेऽर्द्धशब्दो नपुंसकलिंगे वर्तते तस्येदं ग्रहणम् । अर्द्धमित्येतद् नपुंसकमेकदेशिनैकाधिकरणे समस्यते तत्पुरुषश्च समासो भवति । अर्द्धपिप्पल्याः=अर्द्धपिप्पली । अर्द्धकोशातकी ।

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ( २-२-३ ) -४

द्वितीयतृतीयचतुर्थतुर्याणि । अन्यतरस्याम् । द्वितीयं च तृतीयं च चतुर्थं चतुर्यं च=द्वितीयतृतीयचतुर्थ.........तुर्याणि ( इ० द्व० )।

द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहान्यतरस्यां समस्यन्ते तत्पुरुषश्च समासो भवति। अन्यतरस्यामिति वचनात् षष्ठीसमासोऽपि पक्षे भवति। द्वितीयं भिक्षायाः=द्वितीयभिक्षा, भिक्षाद्वितीयं वा। तृतीयभिक्षा, भिक्षातृतीयं वा। चतुर्थभिक्षा, भिक्षाचतुर्थं वा। तुरीयभिक्षा, भिक्षातुरीयं वा।

## प्राप्तापन्ने च द्वितीयया ( २-२-४ )

प्राप्तं चापन्नं च प्राप्तापन्ने ( इ० द्व० )। प्राप्तापन्नशब्दौ द्वितीयान्तेन सह समस्यतेऽन्यतरस्यां तत्पुरुषश्च समासो भवति। प्राप्तो जीविकां=प्राप्तजीविकः, जीविकाप्राप्त इति वा। आपन्नजीविकः, जीविकापन्न इति वा।

## कालाः परिमाणिना ( २-२-५ )

परिमाणमस्यास्तीति परिमाणी तद्वाचिना सुबन्तेन सह कालशब्दाः (परिमाणवचनाः) समस्यन्ते तत्पुरुषश्च समासो भवति। मासो जातस्य=मासजातः, संवत्सरजातः, द्व्यहजातः, त्र्यहजातः।

## नञ् ( २-२-६ )

नञ् समर्थेन सुबन्तेन सह समस्यते तत्पुरुषश्च समासो भवति। न ब्राह्मणः=अब्राह्मणः। अवृषलः 'न लोपो नञः' ( ६-३-७३ ) इति नकार लोपः।

## ईषदकृता ( २-२-७ )

ईषत्। अकृता। न कृत्=अकृत् तेन ( न० त० )। ईषदित्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते तत्पुरुषश्च समासो भवति। ईषत्कडारः, ईषत्पिङ्गलः, ईषद्विकटः, ईषदुन्नतः, ईषत्पीतम्, ईषद्रक्तम्।

## षष्ठी ( २-२-८ ) -१७

पष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते तत्पुरुषश्च समासो भवति। राज्ञः पुरुषः=राजपुरुषः। ब्राह्मणकम्बलः। समासे कृते प्रातिपदिकत्वात् सुपो लुकि 'न लोपः प्रातिपदिकान्तस्य' ( ८-२-७ ) इति नलोपे सौ विभक्तावुपपन्नं राजपुरुष इति रूपम्।

## याजकादिभिश्च ( २-२-९ )

याजकादिभिः। च। याजक आदिर्येषां ते याजकादयस्तैः ( बहु० )। याजकादिभिः सह षष्ठी समस्यते तत्पुरुषश्च समासो भवति। ब्राह्मणस्य याजकः=ब्राह्मणयाजकः। क्षत्रिययाजकः। ब्राह्मणपूजकः। ब्राह्मणपरिचारकः पूर्वेणैव सिद्धे 'कर्त्तरि च' ( २-२-१६ ) इति प्रतिषेधे प्राप्ते वचनं प्रतिप्रसवार्थम्।

## न निर्धारणे ( २-२-१० ) -१९

निर्धारणे सति षष्ठ्यन्तं न समस्यते। निर्धारणं नाम जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणम्। क्षत्रियो मनुष्याणां शूरतमः। कृष्णा गवां सम्पन्नक्षीरतमा। धावन्नध्वगानां शीघ्रतमः।

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ( २-२-११ )

पूरणश्च गुणश्च सुहितार्थश्च सच्च अव्ययं च तव्यं च समानाधिकरणं च=पूरण......समानाधिकरणम्, तेन ( स० द्व० )। पूरणाद्यर्थकैः सुबन्तैः सह षष्ठी न समस्यते। तव्यं वर्जयित्वा अर्थशब्दः प्रत्येकमभिसम्बध्यते तेन स्वरूपविधिर्न भवति। पूरण-छात्राणां पञ्चमः, छात्राणां दशमः। गुण-बलाकायाः शौक्ल्यम्, काकस्य कार्ष्ण्यम्। सुहितार्थः=तृप्त्यर्थः-फलानां सुहितः, फलानां तृप्तः। सत्=ब्राह्मणस्य

कुर्वन्, ब्राह्मणस्य कुर्वाणः। अव्यय-ब्राह्मणस्य कृत्वा, ब्राह्मणस्य हृत्वा। ब्राह्मणस्य कर्त्तव्यम्। 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया अनुबन्धयुक्तेन तव्यत्प्रत्ययेन सह समासो भवत्येव। ब्राह्मणकर्त्तव्यम्। समानाधिकरण-शुकस्य माराविदस्य, राज्ञः पाटलिपुत्रकस्य। पाणिनेः सूत्रकारस्य।

## क्तेन च पूजायाम् (२-२-१२) -१३

पूजार्थे वर्त्तमानेन क्तप्रत्ययेन[1] सह षष्ठ्यन्तं न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः।

## अधिकरणवाचिना च (२-२-१३)

अधिकरणवाचिना क्तेन[2] सह षष्ठ्यन्तं न समस्यते। इदमेषामासितम्। इदमेषां भुक्तम्। इदमेषां यातम्।

## कर्म्मणि च (२-२-१४)

कर्मणि वर्त्तमान षष्ठ्यन्तं न समस्यते। 'उभयप्राप्तौ कर्म्मणि' (२-३-६६) इति कर्मणि विहितायाः षष्ठ्या अत्र ग्रहणम्, च शब्दो हीत्यर्थे पठितः[3]। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना।

## तृजकाभ्यां कर्त्तरि (२-२-१५) -१६

तृच्च अकश्च तृजकौ ताभ्याम् (इ० द्व०)। कर्त्तरि[1] या षष्ठी सा अकप्रत्ययान्तेन सह न समस्यते। तृज्ग्रहणमुत्तरार्थं तद्धि कर्त्तर्येव

---

१—मतिबुद्धिपूजार्थेभ्यश्च (३-२-१८८) इति क्तः।

२—क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः (३-४-७६)।

३—महाभाष्यम् (२-२-१४)।

  

विधीयते तत्प्रयोगे षष्ठी कर्त्तरि नास्तीति। भवतः शायिका, भवत आसिका, भवतोऽग्रगामिका।

## कर्त्तरि च ( २-२-१६ )

कर्त्तरि वर्त्तमानाभ्यां तृजकाभ्यां षष्ठयन्तं न समस्यते। अपां स्रष्टा। पुरां भेत्ता। ओदनस्य भोजकः। सक्तूनां पायकः।

## नित्यं क्रीडाजीविकयोः ( २-२-१७ ) -१६

क्रीडा च जीविका च क्रीडाजीविके तयोः (इ० द्व०) 'क्वचिदेकदेशोऽप्यनुवर्त्तते' इति परिभाषया अगनुवर्त्तते नोभौ, तृजन्तं हि क्रीडाजीविकयोर्नास्ति। क्रीडार्थे जीविकार्थे चागन्तेन सह नित्यं षष्ठ्यन्तं समस्यते तत्पुरुषश्च समासो भवति। नित्यग्रहणान्नञो निवृत्तिः, नित्यो हि प्रतिषेधो भवति विधिर्विभाषेति। उद्दालकपुष्पभञ्जिका, वारणपुष्पप्रचायिका। दन्तलेखकः, नखलेखकः।

---

१—अत्र सूत्रार्थे विदुषां मतभेदः। काशिकाकारेण 'कर्त्तरि' इतिपदं 'षष्ठी' इत्यनुवर्त्तमानस्य पदस्य विशेषणमभिमत्य सूत्रार्थः कृतः। 'कर्त्तरि' ( २-२-१६ ) इति सूत्रे च कर्त्तरिपदं 'तृजकाभ्याम्' इत्येतस्य विशेषणं मत्वार्थः कृतः। सिद्धान्तकौमुद्यां स्वामिदयानन्दप्रणीताष्टाध्यायीभाष्ये चैतस्य विपर्ययो दृश्यते। तथा हि ताभ्यां 'तृजकाभ्यां कर्त्तरि' इत्यत्र 'कर्मणि' इत्यस्यानुवृत्तिमनुज्ञाय तत्पदं 'षष्ठी' इत्यस्य विशेषणत्वेन सम्बद्ध्य सोऽर्थः कृतो यः काशिकायाम् 'कर्त्तरि' इत्यत्र विद्यते, उदाहरणानि च तत्रस्थान्येव दत्तानि। 'कर्त्तरि' इत्यत्र च सोऽर्थः कृतो यः 'तृजकाभ्यां कर्त्तरि' इत्यत्र काशिकायामस्ति। उदाहरणान्यपि तान्येव। तत्र कतमः पक्षः साधीयान् इति जिज्ञासायां ब्रूमः। भाष्यपर्यालोचनया तूत्तरयोर्विदुषोः पक्षः साधीयान् प्रतिभाति। परं न्यासपदमञ्जर्योः समर्थितं काशिकाकारमतम्, सत्यप्यर्थभेदे सर्वे प्रयोगाः सर्वत्र समानरीत्यैव साधिता इत्यस्माद्धेतोरस्माभिः काशिकोक्तमत्र सूत्रे न परित्यक्तं, परीक्षादृष्ट्यापि पाठपरिवर्तनं नोचितमितिदिक्।

## कुगतिप्रादयः ( २-२-१८ )

प्र आदिर्येषां ते प्रादयः ( बहु० )। कुश्च गतिश्च प्रादयश्च कुगतिप्रादयः ( इ० द्व० )। कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते तत्पुरुषश्च समासो भवति। कुः पापार्थे-कुपुरुषः। गतिः-उररीकृतम्, यदूरीकरोति। प्रादयः-दुर्निन्दायाम्-दुष्पुरुषः। स्वती पूजायाम्-सुपुरुषः, अतिपुरुषः। आङीषदर्थे-आपिङ्गलः। दुष्कृतम्, सुष्टुतम्, अतिस्तुतम्, आबद्धम्।

## उपपदमतिङ् ( २-२-१९ ) -२२

उपपदम्। अतिङ्। न तिङ् अतिङ् ( न० त० )। उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यं तत्पुरुषश्च समासो भवति। कुम्भं करोति-कुम्भकारः। नगरकारः। कुम्भ शब्दस्य 'तत्रोपपदं सप्तमीस्थम्' ( ३-१-९२ ) इत्युपपदसंज्ञा। कुम्भोपपदात् कृधातोः 'कर्मण्यण्' ( ३-२-१ ) इत्यण्प्रत्यये, 'कृदतिङ्' ३-१-९३ ) इति कृत्संज्ञायां 'कृत्तद्धितसमासाश्च' ( १-२-४६ ) इति प्रातिपदिकसंज्ञायां सुब्लुकि णित्त्वात् 'अचोञ्णिति' ( ७-२-११६ ) इत्यंगस्य वृद्धौ रपरत्वे सौ रुत्वेविसर्गे सिद्धं-कुम्भकारः इति।

## अमैवाऽव्ययेन ( २-२-२० ) -२१

अमा। एव। अव्ययेन। एवकारो नियमार्थः। अव्ययेनोपपदस्य यः समासः सोऽमा सहैव भवति नान्येन। स्वादुङ्कारं भुङ्क्ते, सम्पन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते। १-१-३८ सूत्रे व्युत्पादितमेतत्।

## तृतीयाप्रभृतीन्यन्यतरस्याम् ( २-२-२१ ) -२२

तृतीयाप्रभृतीनि। अन्यतरस्याम्। 'उपदंशस्तृतीयायाम्' ( ३-४-४७ ) इत्यतः प्रभृति यान्युपपदान्युच्यन्ते 'अन्वच्यानुलोम्ये' ( ३-४-६४ )

इति यावत् तान्यमैवाऽव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते। उच्चैः कारमाचष्टे, उच्चैः कारम्। 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (३-४-५९) इति णमुल्प्रत्ययः। समासपक्षे कृदुत्तरपदप्रकृतिस्वरः।

## क्त्वा च ( २-२-२२ )

क्त्वान्तेन सह तृतीयाप्रभृतीन्युपपदान्यन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उच्चैः कृत्य, उच्चैः कृत्वा। समासपक्षे क्त्वो ल्यबादेशस्तुगागमश्च।

## शेषो बहुव्रीहिः ( २-२-२३ ) -२८

शेषः। बहुव्रीहिः। अभिहितादन्यः शेषः। शेषः समासो बहुव्रीहिसंज्ञो भवति। बहुव्रीहिरित्यधिक्रियते प्राग्द्वन्द्वसमासाधिकारात्।

## अनेकमन्यपदार्थे ( २-२-२४ ) -२९

अनेकम्। अन्यपदार्थे। न एकम् अनेकम् ( न० त० )। अन्यश्चादः पदं च अन्यपदम् ( कर्मधारयः ) तस्यार्थः अन्यपदार्थः ( ष० त० )। अनेकं सुबन्तमन्यपदार्थे वर्त्तमानं समस्यते' बहुव्रीहिश्च समासो भवति। प्रथमार्थं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु समासो भवति। प्राप्तमुदकं यं ग्रामं स प्राप्तोदको ग्रामः। ऊढो रथो येन स ऊढरथोऽनड्वान्। उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः। उद्धृत ओदनो यस्याः सा उद्धृतोदना स्थाली। चित्रा गावो यस्य स चित्रगुर्देवदत्तः। वीराः पुरुषा यस्मिन् स वीरपुरुषको ग्रामः। 'चित्रगुः इत्यत्र 'गोस्त्रियोरुपसर्जनस्य' ( १-२-४८ ) इति ह्रस्वः, 'वीरपुरुषकः' इत्यत्र 'शेषाद् विभाषा' ( ५-४-१५४ ) इति कप्प्रत्ययश्च विशेषः। बहुव्रीहित्वे प्रयोजनं 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६-२-१ ) इत्येवमादि।

  

## संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ( २-२-२५ )

संख्यया। अव्ययासन्नादूराधिकसंख्याः। संख्येये। अव्ययं च आसन्नं च, दूरं च, अधिकं च, संख्या च=अव्ययासन्नादूराधिकसंख्याः (इ० द्व०)। संख्येये या संख्या वर्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते बहुव्रीहिश्च समासो भवति। अव्यय-दशानां समीपे ये ते उपदशाः। उपविंशाः। आसन्न-दशानामासन्ना ये ते आसन्नदशाः। आसन्नविंशाः। दशानामदूरा ये ते अदूरदशाः। अदूरविंशाः। अधिक-दशानामधिका ये ते अधिकदशाः। अधिकविंशाः। संख्या-द्वौ वा त्रयो वा ये ते द्वित्राः। त्रिचतुराः। द्विदशाः। 'बहुव्रीहौ संख्येये डज बहुगणात्' ( ५-४-७३ ) इति डच्प्रत्ययः समासान्तः-'ति विंशतेर्डिति' ( ६-४-१४२ ) इति टिलोपः।

## दिङ्नामान्यन्तराले ( २-२-२६ )

दिङ्नामानि। अन्तराले। दिशांनामानि दिङ्नामानि ( ष० त० )। दिङ्नामानि सुबन्तान्यन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति, दक्षिणस्याः। पूर्वस्याश्च दिशोयदन्तरालं सादक्षिण पूर्वादिक्, पूर्वोत्तरा, पश्चिमदक्षिणा।

## तत्र तेनेदमिति सरूपे ( २-२-२७ )

तत्र। तेन। इदम्। इति। सरूपे। समानं रूपं=सरूपे तस्मिन् ( ~~कर्मधारयः~~ बहुव्रीहिः )। 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपवर्णवयोवचनबन्धुषु' ( ६-३-८५ ) इति समानस्य सादेशः। तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति तृतीयान्ते सरूपे पदे इदमित्येतस्मिन्नर्थे समस्येते बहुव्रीहिश्च समासो भवति। केशेषु केशेषु च गृहीत्वा इदं युद्धं प्रवृत्तं=केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्चेदं युद्धं वृत्तं=दण्डादण्डि। मुशलामुशलि।

  

'इच् कर्मव्यतिहारे' ( ५-४-१२७ ) इतीच्समासान्तः। 'अन्येषामपि दृश्यते' ( ६-३-१३७ ) इति पूर्वपदस्य दीर्घः।

## तेन सहेति तुल्ययोगे ( २-२-२८ )

तेन। सह। इति। तुल्ययोगे। तुल्यश्चासौ योगश्च तुल्ययोगस्तस्मिन् (कर्मधारयः)। सहेत्येतच्छब्दरूपं तुल्ययोगे वर्त्तमानं तेनेति तृतीयान्तेन सह समस्यते वहुव्रीहिश्च समासो भवति। सह पुत्रेणागतः =सपुत्रः। सच्छात्रः। सकर्मकरः। 'वोपसर्जनस्य' ( ६-३-८२ ) इति सहस्य सादेशः।

## चार्थे द्वन्द्वः ( २-२-२६ ) -३४

चस्यार्थः चार्थस्तस्मिन् ( ष० त० )। अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति। इतरेतरयोगे समाहारे चायं समास इष्यते। इतरेतरयोगे तावत्-प्लक्षश्च न्यग्रोधश्च=प्लक्षन्यग्रोधौ। धवश्च, खदिरश्च, पलाशश्च=धवखदिरपलाशाः। समाहारे खल्वपि-वाक्च त्वक्च=वाक्त्वचम्। वाग्दृषदम्। 'द्वन्द्वाच्चुदषहान्तात् समाहारे' ( ५-४-१०६ ) इति समासान्तष्टच् प्रत्ययः। 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' ( २-४-२ ) इत्येकवचनम्। 'स नपुंसकम्' ( २-४-१७ ) इति नपुंसकत्वञ्च। सौ विभक्तौ नपुंसकत्वात् 'अतोऽम्' ( ७-१-२४ ) इत्यमादेशः, 'अमि पूर्वः' ( ६-१-१०७ ) इति पूर्वरूपैकादेशः।

## उपसर्जनं पूर्वम् ( २-२-३० ) -३१,-३८

उपसर्जनम्। पूर्वम्। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यमिति नियमार्थमेतत्। द्वितीया-कष्टश्रितः। तृतीया-शङ्कुलाखण्डः। चतुर्थी-यूपदारु। पञ्चमी-वृकभयम्। षष्ठी-राजपुरुषः। सप्तमी-अक्षशौण्डः।

## राजदन्तादिषु परम् ( २-२-३१ )

राजदन्त आदिर्येषां ते राजदन्तादयस्तेषु ( बहु० )। पूर्वेण पूर्वनिनिपाते प्राप्ते परनिपातार्थं सूत्रम्। राजदन्तादिषूपसर्जनं परं प्रयोक्तव्यम्। दन्तानां राजा राजदन्तः। वनस्याग्रे अग्रेवणम्। लिप्तवासितम्। नग्नभूषितम्। निपातनादलुक्। 'वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः (८-४-४) इति नस्य णत्वम्।

## द्वन्द्वे घि ( २-२-३२ )

-३४

द्वन्द्वे समासे घिसंज्ञकं पूर्वं निपतति। पटुगुप्तौ। मृदुगुप्तौ। पटुमृदुशुक्लाः, मृदुपटुशुक्लाः, पटुशुक्लमृदवः। 'शेषो घ्यसखि' (१-४-७) इति पूर्वस्य घिसंज्ञा।

## अजाद्यदन्तम् ( २-२-३३ )

अजादिर्यस्य तदजादि, अदन्ते यस्य तददन्तम् ( बहु० )। अजादिश्चादोऽदन्तं च=अजाद्यदन्तम् (कर्मधारयः)। अजाद्यदन्तं शब्दरूपं द्वन्द्वे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम्, उष्ट्रशशकम्।

## अल्पाच्तरम् ( २-२-३४ )

अल्पोऽज् यस्मिन् तदल्पाच् ( बहु० )। द्वे इमे अल्पाची, इदमनयोरतिशयेन अल्पाच्=अल्पाच्तरम् 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५-३-५७) इति तरप्प्रत्ययः। अल्पाच्तरं शब्दरूपं द्वन्द्वसमासे पूर्वं प्रयोक्तव्यम्। सत्वश्च न्यग्रोधश्च=सत्वन्यग्रोधौ। धवखदिरपलाशाः। पौर्वापर्यस्य द्वन्द्वसमासेऽनियमे प्राप्ते त्रिसूत्र्या नियमो विधीयते।

## सप्तमीविशेषणे बहुव्रीहौ ( २-२-३५ )

-३७

सप्तमीविशेषणे। बहुव्रीहौ। सप्तमी च विशेषणं च सप्तमीविशेषणे

( इ० द्व० )। सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। उरसिलोमाः। 'अमूर्धमस्तकात् स्वाङ्गादकामे ( ६-३-१२ ) इति सप्तम्यलुग्। चित्रगुः। शबलगुः।

## निष्ठा ( २-२-३६ )

निष्ठान्तं बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कृतकटः। भिक्षितभिक्षः। अवमुक्तोपानत्कः आहूतसुब्रह्मण्यः।

## वाहिताग्न्यादिषु ( २-२-३७ ) -३८

वा। आहिताग्न्यादिषु। आहिताग्निराद्गिर्येषां ते आहिताग्न्यादयस्तेषु ( बहु० )। आहिताग्न्यादिषु निष्ठान्तं पूर्वं विकल्पेन प्रयोक्तव्यम्। आहिताग्निः, अग्न्याहितः। जातपुत्रः, पुत्रजातः। जातदन्तः। जातश्मश्रुः। तैलपीतः। घृतपीतः। ऊढभार्यः। गतार्थः। आकृतिगणोऽयम्।

## कडाराः कर्मधारये ( २-२-३८ )

कडारं इत्येवमादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः। कडारजैमिनिः, जैमिनिकडारः। कडारः पीतः इत्यर्थः।

इति द्वितीयाध्यायस्य द्वितीयः पादः।

—:*०*:—

# अथ द्वितीयाध्यायस्य तृतीयः पादः

### अनभिहिते ( २-३-१ ) -७३

न अभिहितः=अनभि हितस्तस्मिन् ( न० त० )। अनभिहिते इत्यधिकार आपादसमाप्तेः । तिङ्कृत्तद्धितसमासैरनभिहितेऽनुक्ते कर्मादिकारके विभक्तिर्भवति ।

### कर्मणि द्वितीया ( २-३-२ ) -३,-५

अनभिहिते कर्मणिकारके द्वितीया विभक्तिर्भवति । कटं करोति ग्रामं गच्छति । द्वितीयादयः शब्दाः पूर्वाचार्य्यैः सुपां त्रिकेषु स्मर्यन्ते स्मिन्सूत्रे सूत्रकारोऽपि व्यवहरति ।

### तृतीया च होश्छन्दसि ( २-३-३ )

तृतीया । च । होः । छन्दसि । छन्दसि विषये हु (=दानादनयोः ) धातोः कर्मकारके तृतोया विभक्तिर्भति । यवाग्वाऽग्निहोत्रं जुहोति । यवागूमग्निहोत्रं जुहोति ।

### अन्तरान्तरेण युक्ते ( २-३-४ )

अन्तरा च अन्तरेणश्च अन्तरान्तरेणौ ( इ० द्व० ) ताभ्यां युक्तम्, अन्तरान्तरेणयुक्तम्, तस्मिन् (तृ० त०) । उभौ निपातौ । अन्तराऽन्तरेण शब्दाभ्यां योगे द्वितोया विभक्तिर्भवति । अन्तरा त्वां च मां च

कमण्डलुः। अन्तरेण त्वां च मां च कमण्डलुः। तव च मम च मध्ये इत्यर्थः। अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते। अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे, अन्तरेण शब्दस्तच्च विनार्थं च।

## कालाध्वनोरत्यन्तसंयोगे ( २-३-५ ) -७, -६

कालाध्वनोः। अत्यन्तसंयोगे। कालश्चाध्वा च कालाध्वानौ तयोः ( इ० द्व० )। अत्यन्तश्चासौ संयोगश्च अत्यन्तसंयोगस्तस्मिन् ( कर्मधारयः )। कालाध्वनोरित्यर्थग्रहणम्। कालाध्ववाचिभ्यः शब्देभ्योऽत्यन्तसंयोगे गम्यमाने द्वितीया विभक्तिर्भवति। मासमधीते, संवत्सरमधीते, मासं कल्याणी, संवत्सरं कल्याणी, मासं गुडधानाः, संवत्सरं गुडधानाः। क्रोशमधीते, योजनमधीते, क्रोशं कुटिला नदी, योजनं कुटिला नदी, क्रोशं पर्वतः, योजनं पर्वतः।

## अपवर्गे तृतीया ( २-३-६ )

अपवर्गः=फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः। अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति। मासेनानुवाकोऽधीतः, संवत्सरेणानुवाकोऽधीतः। क्रोशेनानुवाकोऽधीतः, योजनेनानुवाकोऽधीतः। पठितो गृहीतोऽपीति भावः।

## सप्तमीपञ्चम्यौ कारकमध्ये ( २-३-७ )

सप्तमी च पञ्चमी च सप्तमीपञ्चम्यौ (इ० द्व०)। कारकयो[1] र्मध्यं कारकमध्यं तस्मिन् ( ष० त० )। कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमी वा पञ्चमी वा विभक्तिर्भवति। अद्य भुक्त्वा देवदत्तो द्व्यहे द्व्यहाद्वा भोक्ता, त्र्यहे त्र्यहाद्वा भोक्ता। इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विध्यति, क्रोशाल्लक्ष्यं विध्यति। इषूनस्यति=इष्वासः पुरुषः। पूर्वत्र

१—मध्यशब्दस्यावधिद्वयापेक्षत्वाद् द्विवचनान्तेन समासः।

  

'भुक्त्वा', 'भोक्ता' इतिकारकद्वयमध्ये 'द्व्यहे', 'त्र्यहे' इतिकाल शब्दौ ताभ्यां सप्तमीपञ्चम्यौ । उत्तरत्र 'इष्वासः', 'लक्ष्यम्' इति कर्त्तृकर्मणोः कारकयोर्मध्ये क्रोशशब्दोऽध्ववाची ततः सप्तमीपञ्चम्यौ भवतः ।"

## कर्मप्रवचनीययुक्ते द्वितीया ( २-३-८ ) -११

कर्मप्रवचनीयैर्युक्तं कर्मप्रवचनीययुक्तं तस्मिन् ( तृ० त० )। कर्मप्रवचनीययुक्ते कारके द्वितीया भवति । शाकल्यस्य संहितामनु प्रावर्षत् । आगस्त्यमन्वसिञ्चत् प्रजाः । 'अनुर्लक्षणे' ( १-४-८३ ) इत्यनुः कर्मप्रवचनीयः ।

## यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ( २-३-९ )

यस्मात् । अधिकम् । यस्य । च । ईश्वरवचनम् । तत्र । सप्तमी । ईश्वरो वचनं यस्य तद् ईश्वरवचनम् ( बहु० ) यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी भवति । द्रोणोऽधिकः खार्य्याः। उपखार्यां द्रोणः । निष्कादधिकं कार्षापणम्-उपनिष्के कार्षापणम् । 'उपोऽधिके च' ( १-४-८७ ) इत्युपशब्दः कर्मप्रवचनीयः । ब्रह्मदत्त ईश्वरः पञ्चालानाम्=अधिब्रह्मदत्ते पञ्चालाः, अधिपञ्चालेषु ब्रह्मदत्तः इति वा । स्वस्वामिनोर्द्वयोरपि पर्य्यायेण सप्तमी भवति । 'अधिरीश्वरे' ( १-४-९७ ) इत्यधिः कर्मप्रवचनीयः ।

## पञ्चम्यपाङ्परिभिः ( २-३-१० ) -११

पञ्चमी । अपाङ्परिभिः । अपश्च आङ्च परिश्च अपाङ्परयस्तैः ( इ० द्व० )। अपाङ्परिभिः कर्मप्रवचनीयैर्योगे पञ्चमी भवति । अपत्रिगर्त्तेभ्यो वृष्टो देवः । आपाटलिपुत्राद् वृष्टो देवः । परिपरित्रिगर्तेभ्यो वृष्टो देवः । 'अपपरी वर्जने' ( १-४-८८ ), 'आङ्मर्यादावचने' ( १-४-८९ ) इति कर्मप्रवचनीय एते ।

  

## प्रतिनिधिप्रतिदाने च यस्मात् ( २-३-११ )

प्रतिनिधिश्च प्रतिदानं च प्रतिनिधिप्रतिदाने ( इ० द्व० )। मुख्य सदृशः प्रतिनिधिः। दत्तस्य द्रव्यान्तरेण प्रत्यर्पणम्-प्रतिदानम्, यस्मात्प्रतिनिधिर्यस्माच्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी भवति। प्रतिनिधिः—अभिमन्युरर्जुनतः प्रति, प्रद्युम्नो वासुदेवतः प्रति, प्रतिदानम्-माषानस्मै तिलेभ्यः प्रतियच्छति। 'प्रतिःप्रतिनिधिप्रतिदानयोः' ( १-४-९२ ) इति प्रतिःकर्मप्रवचनीयः। 'प्रतियोगे पञ्चम्यास्तसिः' ( ५-४-४४ ) इति तसिप्रत्ययः।

## गत्यर्थकर्मणि द्वितीचतुर्थ्यौ चेष्टायामनध्वनि ( २-३-१२ )

गत्यर्थकर्मणि। द्वितीयाचतुर्थ्यौ। चेष्टायाम्। अनध्वनि। गतिरर्थो येषां ते गत्यर्थाः (बहु०) गत्यर्थानां कर्म गत्यर्थकर्म तस्मिन् ( ष० त० ) द्वितीया च चतुर्थी च द्वितीयाचतुर्थ्यौ ( इ० द्व० )। न अध्वा अनध्वा तस्मिन् ( न० त० )। गत्यर्थानां धातूनां चेष्टाक्रियाणामनभिहिते कर्मणि कारकेऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति, ग्रामाय गच्छति। ग्रामं व्रजति, ग्रामाय व्रजति। गत्यर्थेत्यनेनैव सिद्धे चेष्टायामित्यस्य प्रयोजनं यत्र गमनादौ 'वस्तुतश्चेष्टा भवेत्, तत्रैव चतुर्थी यथा स्यादिति, मनसा पाटलिपुत्रं गच्छतीत्यत्र नहि भवति।

## चतुर्थी सम्प्रदाने ( २-३-१३ ) -१७

सम्प्रदानकारकेऽनभिहिते चतुर्थी विभक्तिर्भवति। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति। देवदत्ताय रोचते। पुष्पेभ्यः स्पृहयति। 'कर्मणा यमभिप्रैति स सम्प्रदानम्', 'रुच्यर्थानां प्रीयमाणः' 'स्पृहेरीप्सितः' (१-४-३२।३३।३६ ) इति सम्प्रदानत्वम्।

## क्रियार्थोपपदस्य च कर्मणि स्थानिनः ( २-३-१४ ) -१५

क्रियायै इयं=क्रियार्था ( च० त० ) क्रियार्था क्रिया उपपदं यस्य स क्रियार्थोपपदस्तस्य ( बहु० )। यत्र गम्यते चार्थो न च प्रयुज्यते शब्दः स स्थानी। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( ३-३-१० ) इत्यस्यायं विषयः। क्रियार्थोपदस्य च स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति। कर्मणि द्वितीया प्राप्ता तदपवादः। एधानाहर्तुं व्रजति=एधेभ्योव्रजति। पुष्पेभ्यो व्रजति। आहरणक्रियैव स्थानी तस्याप्रयोगः। व्रजति क्रियोपपदम्।

## तुमर्थाच्च भाववचनात् ( २-३-१५ )

तुमर्थात्। च। भाववचनात्। तुमुनोऽर्थ इवार्थो यस्य स तुमर्थस्तस्मात् ( बहु० )। भावस्य वचनं भाववचनं तस्मात् ( ष० त० )। तुमर्थाद् भाववचनप्रत्ययान्ताद् अप्रयुज्यमानस्य क्रियार्थोपपदस्य धातोर्यदनभिहितं कर्म तस्माच्चतुर्थीविभक्तिर्भवति। पाकाय व्रजति, त्यागाय व्रजति, भूतये व्रजति, सम्पत्तये व्रजति। 'भाववचनाश्च' (३-३-११) इति भविष्यति काले क्रियायामुपपदे क्रियार्थायां विहितानां घञादिप्रत्ययानामिह ग्रहणम्।

## नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ( २-३-१६ )

नमः ·····वषड्योगात्। च। नमः······वषट् इत्यत्र समाहार द्वन्द्व समासः तेन योगः=नमः······योगः, तस्मात् ( तृ० त० )। नमः इत्यादिभिर्योगे वर्त्तमानात् प्रातिपदिकात् चतुर्थी विभक्तिर्भवति। नमो देवेभ्यः, स्वस्ति प्रजाभ्यः, स्वाहाग्नये, स्वधा पितृभ्यः, अलं मल्लो मल्लाय, वषडग्नये, वषडिन्द्राय।

## मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ( २-३-१७ )

मन्यकर्मणि । अनादरे । विभाषा । अप्राणिषु । मन्यतेः कर्म मन्यकर्म तस्मिन् ( ष० त० )। न आदरोऽनादरस्तस्मिन् ( न० त० )। न प्राणयोऽप्राणयस्तेषु ( न० त० )। मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी भवति अनादरे गम्यमाने। न त्वा तृणं मन्ये, न त्वा तृणाय मन्ये। न त्वा बुसं मन्ये, न त्वा बुसाय मन्ये। अप्राणिनोस्तृणबुसयोर्द्वितीयाचतुर्थ्यौ भवतः।

## कर्तृकरणयोस्तृतीया ( २-३-१८ ) -२५

कर्तृकरणयोः। तृतीया। कर्त्ता च करणं च कर्तृकरणे तयोः ( इ० द्व० )। अनभिहिते कर्त्तरि करणे च कारके तृतीयाविभक्तिर्भवति। कर्त्तरि-देवदत्तेन कृतम्, यज्ञदत्तेन भुक्तम्। करणे-दात्रेण लुनाति परशुना छिनत्ति। 'स्वतंत्रः कर्त्ता' ( १-४-५४ ) इति देवदत्तयज्ञदत्तशब्दौ कर्तृसंज्ञकौ। 'साधकतमं करणम्' ( १-४-४२ ) इति च दात्रपरशुशब्दौ करणसंज्ञकौ।

## सहयुक्तेऽप्रधाने ( २-३-१९ )

सहयुक्ते। अप्रधाने। सहेन युक्तं सहयुक्तं तस्मिन् (तृ० त० । न प्रधानम्, अप्रधानम् तस्मिन् ( न० त० )। सहार्थेन युक्तेऽप्रधाने तृतीयाविभक्तिर्भवति। पुत्रेण सहागतः पिता, पुत्रेण सह स्थूलः, पुत्रेण सहगोमान्, पुत्रेण सार्द्धम्। आगमन क्रियया सह पितुः साक्षात् सम्बन्धः इति पितृशब्दः प्रधानम्, पुत्रस्य तु प्रतीयमान इति सोऽप्रधानम्।

## येनाङ्गविकारः ( २-३-२० )

येन। अङ्गविकारः। अङ्गस्य विकारोऽङ्गविकारः ( ष० त० )। अङ्ग-

  

शब्दोऽत्राङ्गसमुदाये वर्त्तते अवयवधर्मेण येनेति च तदवयवे । विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया भवति । अक्ष्णा काणः, पादेन खञ्जः, पाणिना कुण्ठः ।

## इत्थंभूतलक्षणे ( २-३-२१ )

लक्ष्यतेऽनेनेति लक्षणम् 'करणाधिकरणयोश्च' ( ३-३-११७ ) इति ल्युट् । कंचित् प्रकारं प्राप्त इत्थं भूतः, तस्य लक्षणम् इत्थंभूतलक्षणं तस्मिन् ( ष० त० ) । इत्थंभूतलक्षणे यत्कारकं ततस्तृतीया विभक्तिर्भवति । अपि भवान् कमण्डलुना छात्रमद्राक्षीत्, छात्रेणोपाध्यायम्, शिखया परिव्राजकम् । कमण्डल्वादिधारणशीलस्य छात्रादेः परिचये कमण्डल्वादिलक्षणम् ।

## संज्ञोऽन्यतरस्यां कर्मणि ( २-३-२२ )

संज्ञः । अन्यतरस्याम् । कर्मणि । संपूर्वस्य जानातेः कर्मणि कारकेऽन्यतरस्यां तृतीया भवति, पक्षे लक्षणप्राप्ता द्वितीयाऽपि । पित्रा संजानीते, पितरं संजानीते । मात्रा संजानीते, मातरं संजानीते । 'संप्रतिभ्यामनाध्याने' ( १-३-४६ ) इत्यात्मनेपदम् ।

## हेतौ ( २-३-२३ )

-२७

हेतुवाचिनि शब्दे तृतीया भवति । धनेन कुलम् । कन्यया शोकः । विद्यया यशः । कुलादिफलसाधनयोग्यपदार्थो धनादिरत्र हेतुः ।

## अकर्तर्यृणे पञ्चमी ( २-३-२४ )

अकर्त्तरि । ऋणे । पञ्चमी । न कर्त्ता अकर्त्ता तस्मिन् ( न० त० ) । कर्त्तृवर्जितं यदृणं हेतुस्ततः पञ्चमी भवति । शताद् बद्धः, सहस्राद् बद्धः । तृतीयाया अपवादः ।

## विभाषा गुणेऽस्त्रियाम् ( २-३-२५ )

विभाषा । गुणे । अस्त्रियाम् । न स्त्री, अस्त्री, तस्याम् ( न० त० ) । गुणे हेतावस्त्रीलिंगे विभाषा पञ्चमी भवति । पक्षे तृतीयाऽपि । जाड्याद् बद्धः, जाड्येन बद्धः । पाण्डित्यान्मुक्तः, पाण्डित्येन मुक्तः ।

## षष्ठी हेतुप्रयोगे ( २-३-२६ ) -२७

हेतोः प्रयोगः हेतुप्रयोगः ( ष० त० ), तस्मिन् । हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी भवति । अन्नस्य हेतोर्वसति ।

## सर्वनाम्नस्तृतीया च ( २-३-२७ )

सर्वनाम्नः । तृतीया । च । हेतुशब्दप्रयोगे हेतौ द्योत्ये सर्वनाम्नस्तृतीया भवति चात् षष्ठी च । केन हेतुना वसति, कस्य हेतोर्वसति । येन हेतुना वसति, यस्य हेतोर्वसति ।

## अपादाने पञ्चमी ( २-३-२८ )

अपादाने कारके पञ्चमी विभक्तिर्भवति । ग्रामादागच्छति । पर्वतादवरोहति । वृकेभ्यो बिभेति । अध्ययनात् पराजयते । 'ध्रुवमपायेऽपादानम्', 'भीत्रार्थानां भयहेतुः 'पराजेरसोढः' ( १-४-२४।२५।२६ ) इत्यपादानकारकम् ।

## अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ( २-३-२९ )

अन्यश्च आराच्च इतरश्च ऋते च दिक्शब्दश्च अञ्चूत्तरपदश्च आच्च आहिश्च अन्यारादि......जाहयः ( इ० द्व० ), तैर्युतं, तस्मिन् ( तृ० त० ) । दिशां शब्दा दिक्शब्दाः ( ष० त० ) । उत्तरं च तत् पदं चोत्तरपदम् ( कर्मधारयः ) । अञ्चु उत्तरपदं यस्य स अञ्चूत्तरपदः ( बहु० ) । अन्य-आरात्-इतर-ऋते-दिक्शब्द-अञ्चूतरपद-आच्-आहि-

इत्येतैर्योगे पञ्चमी भवति। अन्य इत्यर्थग्रहणं तेन पर्यायप्रयोगेऽपि भवति। अन्यो देवदत्तात्, भिन्नो देवदत्तात्, अर्थान्तरं देवदत्तात्, विलक्षणो देवदत्तात्। आराद् देवदत्तात्, आराद् यज्ञदत्तात्। इतरो देवदत्तात्। ऋते देवदत्तात्, ऋते यज्ञदत्तात्। पूर्वो ग्रामात्पर्वतः, उत्तरो ग्रामात्। पूर्वो ग्रीष्माद् वसन्तः, उत्तरो ग्रीष्मो वसन्तात्। प्राग् ग्रामात्, प्रत्यग् ग्रामात्। दक्षिणा ग्रामात्, उत्तरा ग्रामात्। दक्षिणाहि ग्रामात्, उत्तराहि ग्रामात्। 'दक्षिणादाच्' 'आहि च दूरे' 'उत्तराच्च' (५-३-३६। ३७।३८) इत्युत्तरदक्षिणाभ्यां वक्ष्यमाणावाजाहिप्रत्ययौ गृह्येते।

## षष्ठ्यतसर्थप्रत्ययेन (२-३-३०)

षष्ठी। अतसर्थप्रत्ययेन। 'दक्षिणोत्तराभ्यामतसुच्' (५-३-२८) अत-इत्यतसुच्प्रत्ययस्यात्र ग्रहणम्। अतसोऽर्थः अतसर्थः (ष० त०) अत-सर्थेप्रत्ययः अतसर्थप्रत्ययः (स० त०)। अतसर्थेन प्रत्ययेन युक्ते षष्ठी भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। पुरो ग्रामस्य। पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य।

## एनपा द्वितीया (२-३-३१) -३२

एनप्प्रत्ययान्तेन युक्ते द्वितीया भवति। पूर्वेण षष्ठ्यां प्राप्तायां तद्-बाधनार्थोऽयं योगः। दक्षिणेन ग्रामम्, उत्तरेण ग्रामम्। 'एनबन्यत-रस्यामदूरेऽपञ्चम्याः' (५-३-३५) इत्युत्तराधरदक्षिणेभ्य एनप्प्रत्ययः।

## पृथग्विनानानाभिस्तृतीयान्यतरस्याम् (२-३-३२) -३३

पृथग्विनानानाभिः। तृतीया। अन्यतरस्याम्। पृथक् च विना च, नाना च पृथग्विनानानास्तैः (इ० द्व०)। पृथग्-विना-नानाभिर्योगे तृतीया भवति विकल्पेन, पक्षे पञ्चमी द्वितीया च। पृथग् देवदत्तेन, पृथग् देव-दत्तात्, पृथग् देवदत्तम्। विना देवदत्तेन, विना देवदत्तात्, विना देवदत्तम्। नाना देवदत्तेन, नाना देवदत्तात्, नाना देवदत्तम्।

  

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ( २-३-३३ )

करणे। च। स्तोकाल्पकृच्छ्रकतिपयस्य। असत्त्ववचनस्य। स्तोकं च, अल्पं च, कृच्छ्रं च, कतिपयं च स्तोकाल्पकृच्छ्रकतिपयं तस्य ( स० द्व० )। सत्त्वस्य वचनं सत्त्ववचनं ( ष० त० ) न सत्त्ववचनम् असत्त्ववचनम्, तस्य ( न० त० )। स्तोक-अल्प-कृच्छ्र-कतिपयेभ्योऽसत्त्ववचनेभ्यः करणे कारके अन्यतरस्यां तृतीया विभक्तिर्भवति, पक्षे पंचमी च। स्तोकेन मुक्तः, स्तोकान्मुक्तः। अल्पेन मुक्तः, अल्पान्मुक्तः। कृच्छ्रेण मुक्तः, कृच्छ्रान्मुक्तः। कतिपयेन मुक्तः, कतिपयान्मुक्तः।

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ( २-३-३४ )

दूरान्तिकार्थैः। षष्ठी। अन्यतरस्याम्। दूरं चान्तिकं च दूरान्तिके ( इ० द्व० ), दूरान्तिकेऽर्थौ येषां शब्दानां ते दूरान्तिकार्थास्तैः ( बहु० )। दूरान्तिकार्थैः शब्दैर्योगे षष्ठी भवति विकल्पेन, पक्षे लक्षणप्राप्ता पञ्चमी च। दूरं ग्रामस्य, दूरं ग्रामात्। विप्रकृष्टं ग्रामस्य, विप्रकृष्टं ग्रामात्। अन्तिकं ग्रामस्य, अन्तिकं ग्रामात्। अभ्याशं ग्रामस्य, अभ्याशं ग्रामात्।

## दूरान्तिकार्थेभ्यो द्वितीया च ( २-३-३५ ) -३६

दूरान्तिकार्थेभ्यः। द्वितीया। च। समासः पूर्ववदेव। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया भवति चात् पञ्चमीतृतीयेऽपि। दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण ग्रामस्य। अन्तिकं ग्रामस्य, अन्तिकाद् ग्रामस्य, अन्तिकेन ग्रामस्य। पूर्वसूत्रेण दूरान्तिकार्थैर्योगे अन्यशब्देभ्यो विभक्तयो विधीयन्ते, अत्र तु दूरान्तिकार्थेभ्य एव शब्देभ्यो विभक्तयो भवन्ति।

## सप्तम्यधिकरणे च ( २-३-३६ ) -४१

सप्तमी। अधिकरणे। च। सप्तमी विभक्तिर्भवत्यधिकरणे कारके चात् दूरान्तिकार्थेभ्यश्च। अधिकरणे-कटे आस्ते, शकटे आस्ते, स्थाल्यां

पचति। 'आधारोऽधिकरणम्' (१-४-४५) इति कटादीनामधिकरणत्वम्। दूरान्तिकार्थेभ्यः: दूरे ग्रामस्य, अन्तिके ग्रामस्य, अभ्याशे ग्रामस्य। तदेवं दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति-द्वितीया-तृतीया-पञ्चमी-सप्तम्य इति।

## यस्य च भावेन भावलक्षणम् (२-३-३७) -३८

भावस्य लक्षणं भावलक्षणं (ष० त०)। यस्य च भावेन क्रियया क्रियान्तरं लक्ष्यते ततो भाववतः सप्तमी भवति। गोषु दुह्यमानासु गतः दुग्धास्वागतः। अग्निषु हूयमानेषु गतः, हुतेष्वागतः। गोदोहनादिप्रसिद्ध-क्रियया क्रियान्तरा लक्ष्यते।

## षष्ठी चानादरे (२-३-३८) -४१

षष्ठी। च। अनादरे। न आदरोऽनादरस्तस्मिन् (न० त०)। यस्य क्रियया क्रियान्तरं लक्ष्यते ततोऽनादरे गम्यमाने षष्ठी भवति चात्सप्तम्यपि। रुदतः प्राव्राजीत्, रुदति प्राव्राजीत्। क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीत्। रुदन्तं क्रोशन्तं वाऽनादृत्य प्रव्रजित इत्यर्थः।

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च (२-३-३९)

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः। च। स्वामी चेश्वरश्च अधिपतिश्च दायादश्च साक्षी च प्रतिभूश्च=स्वामी... प्रसूतास्तैः (इ० द्व०)। स्वाम्यादिभिर्योगे षष्ठीसप्तम्यौ भवतः। गवां स्वामी गोषु स्वामी। गवामीश्वरः, गोष्वीश्वरः। गवामधिपतिः, गोष्वधिपतिः। गवां दायादः, गोषु दायादः। गवां साक्षी, गोषु साक्षी। गवां प्रतिभूः, गोषु प्रतिभूः। गवां प्रसूतः, गोषु प्रसूतः।

## आयुक्तकुशलाभ्यां चासेवायाम् (२-३-४०)

आयुक्तकुशलाभ्याम्। च। आसेवायाम्। आयुक्तश्च कुशलश्च आयु-

  

क्तकुशलौ ताभ्याम् (इ० द्व०)। आयुक्तो=व्यापारितः। कुशलो निपुणः। आसेवा=तात्पर्यम्। आयुक्तकुशलाभ्यां योगे आसेवायां गम्यमानायां षष्ठीसप्तम्यौ भवतः। आयुक्तः कटकरणस्य। आयुक्तः कटकरणे। कुशलः कटकरणस्य, कुशलः कटकरणे।

## यतश्च निर्धारणम् (२-३-४१) -४२

यतः। च। निर्धारणम्। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। यतो निर्द्धारणं ततः षष्ठीसप्तम्यौ भवतः। मनुष्याणां क्षत्रियः शूरतमः, मनुष्येषु क्षत्रियः शूरतमः। गवां कृष्णा सम्पन्नक्षीरतमा, गोषु कृष्णा सम्पन्नक्षीरतमा। अध्वगानां धावन्तः शीघ्रतमाः, अध्वगेषु धावन्तः शीघ्रतमाः।

## पञ्चमी विभक्ते (२-३-४२)

यतो विभज्य निर्धारणं स विभज्यमान एव विभक्तः। विभक्ते पञ्चमी भवति। माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः, आढ्यतराः।

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः (२-३-४३)

साधुनिपुणाभ्याम्। अर्चायाम्। सप्तमी। अप्रतेः। साधुश्च निपुणश्च साधुनिपुणौ, ताभ्याम् (इ० द्व०)। न प्रतिः, अप्रतिस्तस्य अप्रतेः साधुनिपुणाभ्यां योगेऽर्चायां पूजायां गम्यमानायां सप्तमीविभक्तिर्भवति, न चेत् प्रति प्रयुज्यते। मातरि साधुः, पितरि साधुः। मातरि निपुणः, पितरि निपुणः।

## प्रसितोत्सुकाभ्यां तृतीया च (२-३-४४)

प्रसितोत्सुकाभ्याम्। तृतीया। च। प्रसितश्च उत्सुकश्च प्रसितोत्सुकौ ताभ्याम् (इ० द्व०)। प्रसितोत्सुकाभ्यां योगे तृतीया च वितात्

सप्तमी च। प्रसितः प्रसक्तः। केशैः प्रसितः, केशेषु प्रसितः। केशैरुत्सुकः, केशेषूत्सुकः।

## नक्षत्रे च लुपि (२-३-४५)

लुबन्तान्नक्षत्रशब्दात् तृतीयासप्तम्यौ भवतः। पुष्येण पायसमश्नीयात्, पुष्ये पायसमश्नीयात्। पुष्यशब्दात् 'नक्षत्रेण युक्तः कालः' (४-२-३) इत्यण्प्रत्ययस्तस्य 'लुबविशेषे' (४-२-४) इति लुपि पुष्य इति रूपम्। सप्तमी लक्षणेनैव सिद्धा, तृतीयार्थमिह वचनम्।

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा (२-३-४६) -४६

प्रातिपदिकस्यार्थः प्रातिपदिकार्थः (ष० त०)। प्रातिपदिकार्थश्च, लिङ्गञ्च, परिमाणञ्च, वचनञ्च=प्रातिपदिकार्थलिङ्गपरिमाणवचनम्। (स० द्व०)। 'प्राति...वचनं' चादो मात्रं च प्रातिपदिकार्थ...वचनमात्रं तस्मिन्। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमात् मात्रशब्दः सर्वैरभिसम्बध्यते। प्रातिपदिकार्थः=सत्ता। लिङ्गं=स्त्री-पुंनपुंसकानि। परिमाणम्=तोलनम्। प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, वचनमात्रे प्रथमाविभक्तिर्भवति। प्रातिपदिकार्थमात्रे-उच्चैः, नीचैः। प्रथमायां सत्यां 'सुप्तिङन्तं पदम्' (१-४-१४) इति पदसंज्ञा, ततश्च सस्य रुत्वविसर्गौ भवतः। लिङ्गमात्रम्-कुमारी, वृक्षः, कुण्डम्। परिमाणमात्रम्-द्रोणः, खारी, आढकम्। वचनमात्रे-एकः, द्वौ, बहवः।

## संबोधने च (२-३-४७) -४८

सम्बोधनम् आभिमुख्यकरणं तत्रापि प्रथमा भवति। हे देवदत्त, हे देवदत्तौ, हे देवदत्ताः।

## साऽऽमन्त्रितम् (२-३-४८) -४६

सा। आमन्त्रितम्। सम्बोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रित-

संज्ञं भवति। देवदत्त, देवदत्तौ, देवदत्ताः। आमन्त्रितत्वे 'आमन्त्रितस्य च' (६-१-१९८) इत्याद्युदात्तं भवति।

## एकवचनं सम्बुद्धिः (२-३-४९)

एकवचनम्। सम्बुद्धिः। आमन्त्रितप्रथमाया यदेकवचनं तत्सम्बुद्धि-संज्ञं भवति। हे पटो, हे देवदत्त। सम्बुद्धिसंज्ञायां सत्यां, 'ह्रस्वस्य गुणः' (७-३-१०८) इति ह्रस्वान्तांगस्य गुणः, 'एङ् ह्रस्वात्सम्बुद्धेः' (६-१-६७) इति सुलोपश्च भवति।

## षष्ठी शेषे (२-३-५०) -७३

कर्मादिभ्योऽन्यः स्वस्वामिसम्बन्धादिः शेषस्तत्र षष्ठी विभक्तिर्भवति। राज्ञः पुरुषः, पशोः पादः, पितुः पुत्रः।

## ज्ञोऽविदर्थस्य करणे (२-३-५१)

ज्ञः। अविदर्थस्य। करणे। विदोऽर्थः, विदर्थः (ष० त०), न विदर्थोऽविदर्थस्तस्य (न० त०) अज्ञानार्थस्य ज्ञाधातोः करणे कारके षष्ठी भवति। सर्पिषो जानीते, मधुनो जानीते। प्रवृत्तिवचनोऽत्र ज्ञाधातुः। सर्पिषा करणेन प्रवर्तते इत्यर्थः। 'अपह्नवे ज्ञः'। (१-३-४४) इत्यतो ज्ञ इत्यनुवर्त्तमाने 'अकर्मकाच्च' (१-३-४५) इत्यात्मनेपदं भवति।

## अधीगर्थदयेशां कर्मणि (२-३-५२) -६१

अधीगर्थदयेशाम्। कर्मणि। 'अधीग्' अर्थो येषां तेऽधीगर्थाः (बहु०)। अधीगर्थाश्च दयश्च ईश्च अधीगर्थदयेशस्तेषाम् (इ० द्व०)। अधिपूर्वक-'इक्' धातुः स्मरणार्थे, दय-(दानगतिरक्षणेषु), ईश् (ऐश्वर्ये) इयेतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी भवति। मातुरध्येति, मातुः स्मरति। सर्पिषो दयते। सर्पिष ईष्टे, मधुन ईष्टे।

  

## कृञः प्रतियत्ने ( २-३-५३ )

प्रतियत्नो=गुणान्तराधानम्। कृञ्धातोः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी भवति। एधोदकस्योपस्कुरुते। शस्त्र-पत्रस्योपस्कुरुते। एधश्चोदकञ्च एधोदकम्, तत् (द्वितीया)। कर्मणि द्वितीया प्राप्ता, तां बाधित्वाऽनेन षष्ठीं विदधाति। 'उपात् प्रतियत्नवैकृतवाक्याध्या-हारेषु' ( ६-१-१३९ ) इति प्रतियत्नेऽर्थे कृञः सुडागमः। 'गन्धनावक्षेपण-सेवन साहसिक्यप्रतियत्न०' ( १-३-३२ ) इत्यात्मनेपदम्।

## रुजार्थानां भाववचनानामज्वरेः ( २-३-५४ )

रुजार्थानाम्। भाववचनानाम्। अज्वरेः। रुजाऽर्थो येषां ते रुजार्था-स्तेषाम् ( बहु० )। भावो वचनं येषां ते भाववचनास्तेषाम् ( बहु० )। न ज्वरिः, अज्वरिस्तस्य ( न० त० )। रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी भवति। चौरस्य रुजति रोगः, चौरस्यामयत्यामयः।

## आशिषि नाथः ( २-३-५५ )

आशिष्यर्थे=इच्छार्थे वर्त्तमानस्य नाथ, ( याच्ञोपतापैश्वर्याशीःषु ) धातोः कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी भवति। सर्पिषो नाथते, मधुनो नाथते। असर्पिष्कोऽर्थित्वादाशास्ते सर्पिर्मे भूयादिति।

## जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ( २-३-५६ )

जासिनिप्रहणनाटक्राथपिषाम्। हिंसायाम्। जासिश्च निप्रहणश्च नाटश्च क्राथश्च पिष्च जासि···पिषस्तेषाम् ( इ० द्व० ) जसु धातोः ( चौरादिकस्य ), निप्रपूर्वकस्य हनः, नाटक्राथपिषां च हिंसाक्रियाणां कर्मणि कारके षष्ठी भवति। चौरस्योज्जासयति, वृषलस्योज्जासयति,

  

चौरस्य निप्रहन्ति, चौरस्य निहन्ति, चौरस्य प्रहन्ति, चौरस्योन्नाटयति, वृषलस्योन्नाटयति, चौरस्य क्राथयति, वृषलस्य क्राथयति, चौरस्य पिनष्टि, वृषलस्य पिनष्टि। क्रथनटोर्मित्त्वात् 'मितां ह्रस्वः' (६-४-९२) इति ह्रस्व प्राप्नोति तद्बाधनार्थमिह वृद्धिनिपातनं क्रियते।

## व्यवहृपणोः समर्थयोः (२-३-५७) -५८

व्यवहृच पण् च व्यवहृपणौ तयोः (इ० द्व०)। समर्थयोः=समानार्थयोः। व्यवपूर्वकहृधातोः पणश्च समर्थयोः कर्मणि कारके षष्ठी भवति। शतस्य व्यवहरति, सहस्रस्य व्यवहरति। शतस्य पणते, सहस्रस्य पणते।

## दिवस्तदर्थस्य (२-३-५८) -६०

दिवः। तदर्थस्य। स (व्यवहारः) अर्थो यस्य स तदर्थस्तस्य (बहु०)। व्यवहारार्थस्य दीव्यतेर्धातोः कर्मणि षष्ठी भवति। शतस्य दीव्यति, सहस्रस्य दीव्यति। 'दिवादिभ्यः श्यन्' (३-१-६९) इति श्यन् विकरणः। 'हलि च' (८-२-७७) इति वकारोपधाया दीर्घः।

## विभाषोपसर्गे (२-३-५९)

विभाषा। उपसर्गे। उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी भवति। शतस्य प्रतिदीव्यति, सहस्रस्य प्रतिदीव्यति। शतं प्रतिदीव्यति, सहस्रं प्रतिदीव्यति।

## द्वितीया ब्राह्मणे (२-३-६०) -६१

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति। गामस्य तदहः सभायां दीव्येयुः। अनुपसर्गस्य दिवः षष्ठ्यां प्राप्तायामिदं वचनम्।

## प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ( २-३-६१ )

प्रेष्यब्रुवोः। हविषः। देवतासम्प्रदाने। प्रेष्यश्च ब्रूश्च प्रेष्यब्रुवौ तयोः ( इ० द्व० ) देवताभ्यः सम्प्रदानं देवतासम्प्रदानम् ( च० त० )। प्रेष्यब्रुवोर्हविषः कर्मणि षष्ठी भवति देवतासम्प्रदाने सति ब्राह्मण-विषये। अग्नये छागस्य हविषो वपाया मेदसः प्रेऽष्य। अग्नये छागस्य हविषो वपाया मेदसोऽनुऽब्रूहि। 'प्रेष्य' इति इषु ( गतौ ) धातोर्दैवादिकस्य लोण्मध्यमपुरुषैकवचनस्य ग्रहणम्। तत्सहचार्याद् ब्रूञपि लोण्मध्यमपुरुषैकवचनविषय एव। 'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः' (८-२-९१ ) इति प्लुतत्वम्। हविः कर्म तस्यान्यानि षष्ठ्यन्तानि विशेषणानि।

## चतुर्थ्यर्थे बहुलं छन्दसि ( २-३-६२ ) -६३

चतुर्थ्यर्थे। बहुलम्। छन्दसि। चतुर्थ्या अर्थश्चतुर्थ्यर्थस्तस्मिन् ( ष० त० ) छन्दसि विषये चतुर्थ्यर्थे बहुलं षष्ठी भवति। पुरुषमृगश्चन्द्रमसः। पुरुषमृगश्चन्द्रमसे इति प्राप्ते। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। वनस्पतिभ्य इति प्राप्ते।

## यजेश्च करणे ( २-३-६३ )

यजेः। च। करणे। यजधातोः करणे कारके छन्दसि विषये बहुलं षष्ठी भवति। घृतस्य यजते, घृतेन यजते। सोमस्य यजते, सोमेन यजते।

## कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ( २-३-६४ )

कृत्वोऽर्थप्रयोगे। काले। अधिकरणे। कृत्वसः ( कृत्वसुचः ) अर्थः= कृत्वोऽर्थः ( ष० त० )। कृत्वोऽर्थ एवार्थो येषां ते कृत्वोर्थाः ( बहु० ) कृत्वोर्थानां प्रयोगः कृत्वोर्थप्रयोगस्तस्मिन् ( ष० त० ) कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठी भवति। पञ्चकृत्वोऽह्नो भुङ्क्ते। द्विरह्नोऽधीते।

## कर्तृकर्मणोः कृति ( २-३-६५ )

कर्त्ता च कर्म च कर्तृकर्मणी तयोः ( इ० द्व० )। कृत्प्रयोगे कर्त्तरि कर्मणि च षष्ठी भवति। कर्त्तरि-भवतः शायिका, भवत आसिका। कर्मणि-अपां स्रष्टा, पुरां भेत्ता, वज्रस्य कर्त्ता।

## उभयप्राप्तौ कर्मणि ( २-३-६६ )

उभयोः ( कर्तृकर्मणोः ) प्राप्तिर्यस्मिन् कृति सोऽयमुभयप्राप्तिस्तस्मिन् (बहु०)। उभयोः कर्तृकर्मणोः प्राप्तौ कर्मण्येव षष्ठी भवति न कर्त्तरि। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते मे ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं यज्ञदत्तेन। कर्मणि षष्ठ्यां विहितायां कर्त्तुरनभिहितत्वात् तृतीया भवति।

## क्तस्य च वर्त्तमाने ( २-३-६७ )

क्तस्य वर्त्तमानकाले विहितस्य प्रयोगे षष्ठी भवति। राज्ञां मतः, राज्ञां बुद्धः, राज्ञां पूजितः। 'मतिबुद्धिपूजार्थेभ्यश्च' ( ३-२-१८८ ) इति वर्त्तमानकाले क्तः प्रत्ययो विधीयते, तस्येदं ग्रहणम्। भूतार्थस्य प्रयोगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' ( २-३-६९ ) इति निषेधो भवति।

## अधिकरणवाचिनश्च ( २-३-६८ )

अधिकरणवाचिनः। च। अधिकरणवाचिनः क्तस्य प्रयोगे षष्ठी विभक्तिर्भवति। इदमेषामासितम्, इदमेषां शयितम्। इदमहेः सृप्तम्, इदं 'वनकपेर्यातम्' इदमेषां भुक्तम्, इदमेषाम शितम् 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३-४-७६) इति यः क्तोऽधिकरणे ततोऽन्यत्र च विहितस्तस्यात्र ग्रहणम्। षष्ठीप्रतिषेधापवादो योगः। 'अधिकरणवाचिना च' ( २-२-१३ ) इति षष्ठीसमासप्रतिषेधः।

## न लोकाव्ययनिष्ठाखलर्थतृनाम् ( २-३-६९ ) -७०

खलोऽर्थः खलर्थः, खलर्थ एवार्थो येषां ते खलार्थाः (बहु०)। लश्च, उश्च, उकश्च, अव्ययञ्च, निष्ठा च, खलर्थश्च, तृन् च= लोकाव्ययनिष्ठाखलर्थतृनः, तेषाम् (इ० द्व०)। लादीनां प्रयोगे षष्ठी न भवति। ल-इत्यनेन शतृशानच्कानच्क्वसुकिकिन्प्रत्ययादेशा गृह्यन्ते। शतृ-ओदनं पचन्। शानच्-ओदनं पचमानः। कानच्-ओदनं पेचानः। क्वसु-ओदनं पेचिवान्। कि-पपिः सोमम्। किन्-ददिर्गाः। उ-कटं चिकीर्षुः। ओदनं बुभुक्षुः। उक-आगामुकं वाराणसीं रक्ष आहुः। अव्ययं-कटं कृत्वा, ओदनं भुक्त्वा। निष्ठा-ओदनं भुक्तवान्, देवदत्तेन कृतम्। खलर्थ-ईषत्करः कटो भवता। ईषत्पानः सोमो भवता। तृन्-कर्त्ता कटान्, वदिता जनापवादान्। सोमं पवमानः। नटमाध्मानः। अधीयन् पारायणम्। तृनिति प्रत्याहारग्रहणम् 'लटः शतृशानचावप्रथमासमानाधिकरणे' (३-२-१२४) इति शतृप्रत्ययमारभ्य आ तृनो (३-२-१३५) नकारात्। तेन शतृशानच्शानन्चानश्तृन्-इति पंचानां ग्रहणं भवति। इहोक्तसूत्रेण शतृशानचौ प्रत्ययौ भवतः। 'लिटः कानज्वा' (३-२-१०६) इति कानच्। 'क्वसुश्च' (३-२-१०७) इति क्वसुः, 'आदृगमहनजनः किकिनौ लिट् च' (३-२-१७१) इति किकिनौ, 'सनाशंसभिक्ष उः' (३-२-१६८) इत्युः, 'लषपतपद०' (३-२-१५४) इत्युकञ्, 'क्त्वातोसुन्कसुनः' (१-१-३९) इत्यव्ययत्वं क्त्वादीनाम् 'निष्ठा' (३-२-१०२) इति क्तक्तवतू, 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (३-३-१२६) इति खल्, 'आतोयुच्' (३-३-१२८) इति खलर्थे युच्प्रत्ययः। पूङ्यजोः शानन्' (३-२-१२८) इति शानिनि-पवमानः। 'इङ्धार्योः शत्रकृच्छ्रिणि' (३-२-१३०) इति शतरि-अधीयन् इति।

## अकेनोर्भविष्यदाधमर्ण्ययोः ( २-३-७० )

अकेनोः। भविष्यदाधमर्ण्ययोः। अकश्च इन् च अकेनौ, तयोः

( इ० द्व० )। भविष्यच्च, आधमर्ण्यं, च भविष्यदाधमर्ण्ये, तयोः ( इ० द्व० )। अकप्रत्ययस्य भविष्यत्काले विहितस्य, इनो भविष्यति-चाधमर्ण्ये च विहितस्य प्रयोगे षष्ठी न भवति। अक-कटं कारको व्रजति, ओदनं भोजको व्रजति। इन्-ग्रामं गमी, ग्रामं गामी। शतं दायी, सहस्रं दायी। 'ण्वुल्तृचौ' ( ३-१-१३३ ) इति ण्वुल्प्रत्ययः, वुस्थाने 'युवोरनाकौ' ( ७-१-१ ) इत्यकादेशः। 'भविष्यति गम्यादयः' ( ३-३-३ ) इति भविष्यदर्थे गमेरिनिप्रत्ययः। 'आवश्यकाधमर्ण्ययोर्णिनिः' ( ३-३-१७० ) इत्याधमर्ण्ये णिनिः।

## कृत्यानां कर्त्तरि वा ( २-३-७१ )

कृत्यानाम्। कर्त्तरि। वा। कृत्यानां प्रयोगे कर्त्तरि वा षष्ठी भवति। भवता कटः कर्त्तव्यः। भवतः कटः कर्त्तव्यः। 'कर्तृकर्मणोः कृति' ( २-३-६५ ) इति नित्यं षष्ठी प्राप्ता सा कर्त्तरि विकल्प्यते।

## तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ( २-३-७२ )

तुल्यार्थैः। अतुलोपमाभ्याम्। तृतीया। अन्यतरस्याम्। तुल्योऽर्थो येषां ते तुल्यार्थास्तैः ( बहु० )। तुला चोपमा च तुलोपमे ( इ० द्व० ) न तुलोपमे, अतुलोपमे, ताभ्यां ( न० त० )। तुल्यार्थैः शब्दैर्योगे तृतीया भवत्यन्यतरस्यां पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा। तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य। सदृशो देवदत्तेन, सदृशो देवदत्तस्य। वेति वर्त्तमानेऽन्यतरस्यां ग्रहणमुत्तरसूत्रे तस्य चकारेण अनुकर्षणार्थम्, इतरथा हि तृतीयाऽनुकृष्येत।

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ( २-३-७३ )

चतुर्थी। च। आशिषि। आयुष्यमद्रभद्रकुशलसुखार्थहितैः। आयुष्यं च मद्रं च भद्रं च कुशलं च, सुखं चार्थश्च, हितं च=आयुष्य.....हितानि, तैः ( इ० द्व० )। आशिषि गम्यमानायाम् आयुष्यादिभियोगे

चतुर्थी विभक्तिर्भवति चात् षष्ठ्यापि। आयुष्यं देवदत्ताय भूयात्, आयुष्यं देवदत्तस्य भूयात्। भद्रं देवदत्ताय, देवदत्तस्य वा भूयात्। भद्रं देवदत्ताय देवदत्तस्य वा भूयात्। कुशलं देवदत्ताय देवदत्तस्य वा भूयात्। निरामयं देवदत्ताय देवदत्तस्य वा भूयात्। सुखं देवदत्ताय देवदत्तस्य वा भूयात्। शं देवदत्ताय देवदत्तस्य वा भूयात्। अर्थो देवदत्ताय देवदत्तस्य वा भूयात्। प्रयोजनं देवदत्ताय देवदत्तस्य वा भूयात्। हितं देवदत्ताय देवदत्तस्य वा भूयात्। पथ्यं देवदत्ताय देवदत्तस्य वा भूयात्। आयुष्यादीनां पर्याय-ग्रहणम्-इति वार्त्तिकेन पर्यायोऽत्रगृह्यते।

इति द्वितीयाध्यायस्य तृतीयः पादः।

—:o:—

# अथ द्वितीयाध्यायस्य चतुर्थः पादः

## द्विगुरेकवचनम् ( २-४-१ ) -१६

द्विगुः । एकवचनम् । एकस्य वचनमेकवचनं ( ष० त० ) । एकस्यार्थस्य वाचकः इति यावत् । द्विगुः समासः एकवचनं भवति । सामर्थ्यात् समाहारद्विगोरिदं ग्रहणम् । पञ्चपूलाः-समाहृताः पञ्चपूली । दशपूली । अनयोरुदाहरणयोः सिद्धिः २-१-५१ सूत्रस्यवृत्तौ द्रष्टव्या ।

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ( २-४-२ ) -१६

द्वन्द्वः । च । प्राणितूर्यसेनाङ्गानाम् । प्राणी च तूर्यश्च सेना च प्राणितूर्यसेनाः, तेषामंगानि प्राणितूर्यसेनाङ्गानि, तेषाम् ( द्वन्द्वगर्भस्तत्पुरुषः ) । प्राण्यंगानां तूर्याङ्गानां सेनाङ्गानां च द्वन्द्व एकवद्भवति । प्राण्यंगानाम्-पाणी च पादौ च=पाणिपादम् । शिरश्च ग्रीवा च=शिरोग्रीवम् । तूर्याङ्गानाम्-मार्दंगिकश्च पाणविकश्च=मार्दंगिकपाणविकम् । वीणावादकाश्च परिवादकाश्च=वीणावादकपरिवादकम् । सेनाङ्गानाम्-रथिकाश्चाश्वारोहाश्च=रथिकाश्वारोहम् । रथिकाश्च पादाताश्च=रथिकपादातम् । द्वन्द्वसमासस्योभयपदार्थप्रधानत्वाद्द्वि वचनं बहुवचनं वा प्राप्तं तत्रैकवचनं विधीयते । तच्च 'स नपुंसकम्' ( २-४-१७ ) इति नपुंसकमेव भवति ।

## अनुवादे चरणानाम् ( २-४-३ )

चरणानां द्वन्द्वः एकवद् भवति अनुवादे गम्यमाने । उदगात् कठकालापम्, प्रत्यष्ठात् कठकौथुमम् । कठाश्च कालापाश्च, कठाश्च कौथुमाश्चेति विग्रहे द्वन्द्वः । चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्त्तते । उक्तस्य पुनः कथनमनुवादः ।

## अध्वर्युक्रतुरनपुंसकम् ( २-४-४ )

अध्वर्युक्रतुः । अनपुंसकम् । अध्वर्योः ( यजुर्वेदस्य ) क्रतुः=अध्वर्युक्रतुः ( ष० त० ) । न नपुंसकम्=अनपुंसकं ( न० त० ) । अध्वर्युक्रतुवाचिनां शब्दानामनपुंसकलिंगानां द्वन्द्व एकवद्भवति । अर्कश्चाश्वमेधश्च=अर्काश्वमेधम् । सायाह्नश्च अतिरात्रश्च=सायाह्नातिरात्रम् । क्रतुशब्दः सोमयागेषु रूढः ।

## अध्ययनतोऽविप्रकृष्टाख्यानाम् ( २-४-५ )

अध्ययनतः । अविप्रकृष्टाख्यानाम् । न विप्रकृष्टा अविप्रकृष्टा=( ष० त० ) । अविप्रकृष्टा आख्या येषां ते अविप्रकृष्टाख्यास्तेषाम् ( बहु० ) । अध्ययननिमित्तेन येषामविप्रकृष्टा (=प्रत्यासन्ना ) आख्या तेषां द्वन्द्व एकवद् भवति । पदकश्च क्रमकश्च=पदकक्रमकम् । क्रमकश्च वार्त्तिकश्च=क्रमकवार्त्तिकम् । वृत्तिः=संहिता, तामधीते वार्त्तिकः । 'क्रतूक्थादिसूत्रान्ताट्ठक्' ( ४-२-६० ) इति ठक्प्रत्ययः ।

## जातिरप्राणिनाम् ( २-४-६ )

जातिः । अप्राणिनाम् । न प्राणिनोऽप्राणिनस्तेषाम् ( नं० त० ) । जातिवाचिनां शब्दानां द्वन्द्व एकवद् भवति प्राणिनो वर्जयित्वा । आरा च शस्त्री च=आराशस्त्रि । धानाशष्कुलि ।

## विशिष्टलिंगो नदीदेशोऽग्रामाः ( २-४-७ )

विशिष्टलिङ्गः । नदी । देशः । अग्रामाः । विशिष्टो लिंगो यस्य स विशिष्ट लिंगः ( बहु० ) । न ग्रामाः=अग्रामाः ( न०त० ) विशिष्टलिंगानां ( =भिन्नलिंगानां ) नदीवाचिनां देशवाचिनां च शब्दानां ग्रामवर्जितानां द्वन्द्व एकवद् भवति । नदी देश इति नद्यवयवो देशावयवश्च गम्यते । उद्ध्यश्च इरावती च उद्ध्येरावति । गंङ्गा च शोणं च=गंगाशोणम् । देशः–कुरवश्च कुरुक्षेत्रं च=कुरुकुरुक्षेत्रम् । कुरवश्च कुरुजाङ्गलंच= कुरुकुरुजांगलम् ।

## क्षुद्रजन्तवः ( २-४-८ )

क्षुद्राश्च ते जन्तवश्चा=क्षुद्रजन्तवः (कर्मधारयः) । क्षुद्रजन्तुवाचिनां द्वन्द्व एकवद् भवति । दंशाश्च मशकाश्च=दंशमशकम् । यूकालिक्षम् । अल्पशरीरार्थक इह क्षुद्रशब्दः । तेन सूक्ष्मादारभ्य नकुलपर्यन्ता प्राणिन इष्यन्ते । तथा च स्मर्यते–

> क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः ।
> शतं वा प्रसृतौ येषां केच्चिन्नानकुलादपि ॥ इति ।

## येषां च विरोधः शाश्वतिकः ( २-४-९ )

येषाम् । च । विरोधः । शाश्वतिकः । च शब्द एवकारार्थः । येषां शाश्वतिकः ( =नित्यः ) विरोधः ( =वैरम् ) तद्वाचिनां द्वन्द्व एकवदेव भवति । मार्जारश्च मूषकश्च=मार्जारमूषकम् । अहिनकुलम् । मार्जार-मूषकयोः, अहिनकुलयोश्च स्वाभाविकं वैरं प्रसिद्धमेव ।

## शूद्राणामनिरवसितानाम् ( २-४-१० )

शूद्राणाम् । अनिरवसितानाम् । न निरवसिताअनिरवसितातेषाम् ( न० त० ) । यैर्भुक्ते पात्रं संस्कारेणापि न शुद्ध्यति ते निरवसिताः ।

अनिरवसितशूद्रवाचिनां शब्दानां द्वन्द्व एकवद् भवति। तक्षा च अयस्कारश्च=तक्षायस्कारम्। रजकश्च तन्तुवायश्च रजकतन्तुवायम्।

## गवाश्वप्रभृतीनि च (२-४-११)

गवाश्वप्रभृतीनि कृतैकवद्भावानि द्वन्द्वरूपाणि साधूनि भवन्ति। गवाश्वम्। गवाविकम्। अजाविकम्। अजैडकम्। कुब्जवामनम्, कुब्जकैरातकम्, पुत्रपौत्रम्।

## विभाषा वृक्षमृगतृणधान्यव्यंजनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् (२-४-१२) -१३-

वृक्ष......उत्तराणाम्-इत्यत्रेतरद्वन्द्वसमासः। वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुनि-अश्ववडव-पूर्वापर-अधरोत्तर-इत्येतेषां द्वन्द्वो विभाषैकवद् भवति। प्लक्षाश्च न्यग्रोधाश्च=प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः वा। रुरवश्च पृषताश्च=रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरं, पूर्वापरे। अधरोत्तरं, अधरोत्तरे। "सित्तद्विशेषाणां वृक्षाद्यर्थम्" (वा० १-१-६४) इति वार्त्तिकेन वृक्षादीनां विशेषजातयोऽत्र द्वन्द्वैकवद्भावे गृह्यन्ते।

## विप्रतिषिद्धं चानधिकरणवाचि (२-४-१३)

विप्रतिषिद्धम्। च। अनधिकरणवाचि। परस्परविरुद्धं विप्रतिषिद्धम्। अधिकरणं वक्तीति अधिकरणवाचि (उपपदसमासः), न अधिकरणवाचि=अनधिकरणवाचि (न० त०)। विप्रतिषिद्धार्थानां शब्दानामनधिकरणवाचिनामद्रव्यवाचिनां द्वन्द्वो विभाषैकवद् भवति।

शीतं चोष्णं च=शीतोष्णम्, शीतोष्णे। सुखं च दुःखं च=सुखदुःखम्, सुखदुःखे। जीवितमरणम्, जीवितमरणे।

## न दधिपयआदीनि ( २-४-१४ ) -१५

दधि च पयश्च=दधिपयसी ( इ० द्व० ) दधिपयसी आदिर्येषां तानि दधिपयआदीनि (बहु०)। दधिपयआदीनि शब्दरूपाणि नैकवद् भवन्ति। दधि च पयश्च=दधिपयसी। सर्पिर्मधुनी, मधुसर्पिषी। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ।

## अधिकरणैतावत्त्वे च ( २-४-१५ ) -१६

एतावतो भाव एतावत्त्वम्, अधिकरणस्यैतावत्त्वम्=अधिकरणैतावत्त्वम्, तस्मिन् (ष० त०)। अधिकरणस्यैतावत्त्वे इयत्तापरिच्छेदे गम्यमाने द्वन्द्वो नैकवद् भवति। दश दन्तोष्ठाः; दश मार्दङ्गिकपाणविकाः।

## विभाषा समीपे ( २-४-१६ )

अधिकरणैतावत्त्वस्य समीपे द्वन्द्वो विभाषैकवद् भवति। उपदशं दन्तोष्ठम्, उपदशा दन्तोष्ठाः। उपदशं मार्दङ्गिकपाणविकम्। उपदशा मार्दङ्गिकपाणविकाः।

## स नपुंसकम् ( २-४-१७ ) -२५

सः। नपुंसकम्। यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर्द्वन्द्वश्च। द्विगुः-पञ्चगवम्, दशगवम्। द्वन्द्वः—पाणिपादम्, शिरोग्रीवम्। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' ( २-४-२६ ) इति वक्ष्यति। तस्यायं पुरस्तादपवादः।

## अव्ययीभावश्च ( २-४-१८ )

अव्ययीभावः। च। अव्ययीभावश्च समासो नपुंसकलिङ्गो भवति।

  

अधिस्त्रि । उपकुमारि । उन्मत्तगंगम् । लोहितगंगम् । नपुंसकत्वे प्रयोजनानि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' ( १-२-४७ ), 'स्वमोर्नपुंसकात्' 'अतोऽम्' ( ७-१-२३/२४ ) इत्येवमादीनि ।

## तत्पुरुषोऽनञ्कर्मधारयः ( २-४-१९ ) -२५

तत्पुरुषः । अनञ्कर्मधारयः । नञ्च कर्मधारयश्च=नञ्कर्मधारयः ( स० द्व० ) । न नञ्कर्मधारयः, अनञ्कर्मधारयः । नञ्समासं कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गो भवति यदित ऊर्ध्वमनुक्रमिष्यते तत्र । अधिकारसूत्रमेतत् ।

## सञ्ज्ञायां कन्थोशीनरेषु ( २-४-२० )

संज्ञायाम् । कन्था । उशीनरेषु । संज्ञायां विषये कन्थान्तस्तत्पुरुषो पुंसकलिंगो भवति, सा चेत् कन्था उशीनरेषु भवति । सुशमस्यापत्यानि सौशमयः, तेषां कन्था सौशमिकन्थम् । आह्वरकन्थम् ।

## उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ( २-४-२१ )

उपज्ञोपक्रमम् । तदाद्याचिख्यासायाम् । उपज्ञायते या सोपज्ञा, उपक्रम्यते यः स उपक्रमः । उपज्ञा चोपक्रमश्च=उपज्ञोपक्रमम् ( स० द्व० ) आख्यातुमिच्छा आचिख्यासा । तयोः ( उपज्ञोपक्रमयोः ) आदिस्तदादिः ( ष० त० ), तदादेराचिख्यासा=तदाद्याचिख्यासा, तस्याम् ( ष० त० ) । उपज्ञोपक्रमान्तस्तत्पुरुषो नपुंसकलिंगो भवति । तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम् । पाणिन्युपज्ञमकालकं व्याकरणम् । पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकम् ( कालाधिकाररहितम् ) व्याकरणमित्यर्थः । व्याड्युपज्ञं दुष्करणम् । दशहुष्करणमिति पाठान्तरम् । आढ्योपक्रमं प्रासादः । नन्दोपक्रमाणि मानानि । दर्शनीयोपक्रमं सुकुमारम् ।

  

## छाया बाहुल्ये ( २-४-२२ )

छायान्तस्तत्पुरुषो नपुंसकलिंगो भवति बाहुल्ये गम्यमाने। शलभानां छाया शलभच्छायम्, इक्षुच्छायम्। पूर्वपदार्थधर्मो बाहुल्यम्। 'विभाषा सेनासुराच्छायाशालानिशानाम्' ( २-४-२५ ) इति छायान्तस्य तत्पुरुषस्य वैकल्पिके नपुंसके प्राप्ते नित्यार्थं वचनम्।

## सभा राजाऽमनुष्यपूर्वा ( २-४-२३ ) -२४

सभा। राजाऽमनुष्यपूर्वा। न मनुष्योऽमनुष्यः ( न० त० )। राजा चामनुष्यश्च राजामनुष्यौ ( इ० द्व० ) तौ पूर्वौ यस्याः सा राजामनुष्यपूर्वा ( बहु० )। सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, साचेत् सभा राजाऽमनुष्यपूर्वा भवति। राजपूर्वा-इनसभम्। 'जित्पर्यायवचनस्यैव राजाद्यर्थम्' (वा० १-१-६८) इत्युक्तं तेनेह राज्ञः पर्यायस्यैव ग्रहणं भवति, न राजन्शब्दरूपस्य न वा तद्विशेषणस्य। अमनुष्यपूर्वा-रक्षःसभम्, पिशाचसभम्। अमनुष्यपदेन मनुष्यभिन्नास्तत्सदृशा रक्षःपिशाचादयो गृह्यन्ते। अथवाऽव्युत्पन्नोऽयं शब्दो रूढिश्च तस्मिन्नर्थे। पूर्ववदिहापि पर्यायवचनस्यैव ग्रहणम्।

## अशाला च ( २-४-२४ )

न शाला अशाला ( न० त० )। सभाशब्दः शालार्थकः ? संघार्थकश्च तत्राऽशालापदेन संघार्थस्य ग्रहणम्। अशाला या सभा तदन्तस्तत्पुरुषो नपुंसकलिंगो भवति। स्त्रीसभम्, दासीसभम्। स्त्रीसंघो, दासीसंघ इत्यर्थः। शालार्थके तु 'अनाथसभा' ( =अनाथशाला ) इत्यत्र 'परवल्लिंगं द्वन्द्वतत्पुरुषयोः' ( २-४-२६ ) इति नियमात् स्त्रीलिंग एव भवति।

## विभाषा सेनासुराच्छायाशालानिशानाम् ( २-४-२५ )

सेना च, सुरा च, छाया च, शाला च, निशा च=सेना……निशाः,

तासाम् ( इ० द्व० ) । सेना-सुरा-छाया-शाला-निशान्तस्तत्पुरुषो विभाषा नपुंसकलिंगो भवति । ब्राह्मणसेनम् ब्राह्मणसेना । यवसुरम्, यवसुरा । कुड्यच्छायम्, कुड्यच्छाया । गोशालम्, गोशाला । श्वनिशम्, श्वनिशा ।

## परवल्लिंगं द्वन्द्वतत्पुरुषयोः ( २-४-२६ )

परवत् । लिंगम् । द्वन्द्वतत्पुरुषयोः । परस्येव परवत् 'तत्र तस्येव' ( ५-१-११६ ) इति षष्ठ्यर्थे वतिः । द्वन्द्वश्च तत्पुरुषश्च द्वन्द्वतत्पुरुषौ, तयोः ( इ० द्व० ) द्वन्द्वे तत्पुरुषे च परस्येव लिंगं भवति । समाहारद्वन्द्वे नपुंसकस्य विधानादितरेतरद्वन्द्वस्यात्र ग्रहणं भवति । द्वन्द्वे-कुक्कुटमयूर्याविमे; मयूरीकुक्कुटाविमौ । तत्पुरुषे-अर्द्धपिप्पली, अर्द्धकोशातकी, अर्द्धनखरञ्जनी । उत्तरपदस्य मयूर्यादेर्यल्लिंगं तदेव समासस्यापि भवति ।

## पूर्ववदश्ववडवौ ( २-४-२७ ) -२८

पूर्ववत् । अश्ववडवौ । अश्वश्च वडवा च अश्ववडवौ (इ० द्व०)। अश्ववडवयोः पूर्वस्येव लिंगं भवति । 'विभाषा वृक्षमृग०' ( २-४-१२ ) इत्यत्राश्ववडवयोर्विभाषैकवद्भाव उक्तः, तत्रैकवत्भावादन्यत्र पूर्वेण परवल्लिंगतायां प्राप्तायां तद्बाधनार्थोऽयं योगः । अश्वश्च वडवा च अश्ववडवौ ।

## हेमन्तशिशिरावहोरात्रे च च्छन्दसि ( २-४-२८ )

हेमन्तशिशिरौ । अहोरात्रे । च । छन्दसि । हेमन्तश्च शिशिरं च हेमन्तशिशिरौ ( इ० द्व० ) । अहश्च रात्रिश्च अहोरात्रे ( इ० द्व० ) । हेमन्तशिशिरौ, अहोरात्रे इत्येतयोश्छन्दसि विषये पूर्ववल्लिंगं भवति । हेमन्तशिशिरावृतूनां प्रीणामि । अहोरात्रे इदं ब्रूमः ।

  

## रात्राह्नाहाः पुंसि ( २-४-२६ )

रात्रश्च, अह्नश्च अहश्च=रात्राह्नाहाः ( इ० द्व० )। रात्र-अह्न-अह-शब्दाः कृतसमासान्ताः पुंल्लिंगे भवन्ति। द्वयोः रात्रयोः समाहारः द्विरात्रः, त्रिरात्रः, चतूरात्रः। पूर्वाह्णः, अपराह्णः, मध्याह्नः। द्व्यहः, त्र्यहः, परवल्लिंगत्वेन स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। द्वयो रात्र्योः समाहार इत्यत्र 'तद्धितार्थोत्तरपदसमाहारे च' (२-१-५१) इति द्विगुसमासे 'अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' ( ५-४-८७ ) इति संख्यादे रात्रि-शब्दस्याच्समासान्तप्रत्यये, पूर्वस्य भसंज्ञायामिकारलोपे, प्रकृतसूत्रेण पुल्लिंगनियमे सौ द्विरात्र इति पदं साधु। एवं त्रिरात्र इत्याद्यपि सिद्धम्। पूर्वमह्नः इति विग्रहे 'पूर्वाऽपराधरोत्तरम्०' (२-२-१) इति तत्पुरुषसमासे 'राजाहः सखिभ्यष्टच्' ( ५-४-९१ ) इति टच्समासान्ते, 'अह्नो अह्न एतेभ्यः' ( ५-४-८८ ) इत्यह्नादेशे, अकारलोपे 'अह्नोऽदन्तात्' ( ८-४-७ ) इति नस्य णत्वे, सौ पुंसि पूर्वाह्णः इति सिद्धम्। एवं अपराह्णः इत्याद्यपि सिद्धम्। द्वे अहनी समाहृते इति पूर्ववत् समासान्ते टच्प्रत्यये 'न संख्यादेः समाहारे' ( ५-४-८९ ) इत्यह्नादेशप्रतिषेधे 'अह्नष्टखोरेव' ( ६-४-१४५ ) इति टिलोपे प्रकृतसूत्रेण पुलिंगप्रयोगनियमे सौ द्व्यहः इति साधु। एवं त्र्यह इत्याद्यपि सिद्धम्।

## अपथं नपुंसकम् ( २-४-३० ) -३१

अपथम्। नपुंसकम्। न पन्थाः, अपथम् ( न० त० ), 'ऋक्पूरब्धूःपथामानक्षे' (५-४-७४) इति समासान्तोऽप्रत्ययः। अपथशब्दस्तत्पुरुषो नपुंसकलिंगो भवति। अपथमिदम्। अपथानि गाहते मूढः।

## अर्धर्चाः पुंसि च ( २-४-३१ )

बहुवचननिर्देशाद् बहवोऽर्धर्चादयो विज्ञायन्ते। अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते। अर्द्धर्चः, अर्द्धर्चम्। गोमयः, गोमयम्। कषा-

यम्, कषायः। कार्षापणम्, कार्षापणः। कुतपम्, कुतपः। कपाटम्, कपाटः। शङ्खम्, शङ्खः।

## इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ( २-४-३२ ) -३४, ३४, ३३, ३३

इदमः। अन्वादेशे। अश्। अनुदात्तः। तृतीयादौ। पश्चाद्य आदेशः सोऽन्वादेशः। यत्किंचिद् विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यमानमन्वादेशः। तृतीया आदिर्यस्याः सा तृतीयादिः तस्याम् तृतीयादौ ( बहु० )। इदमोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तस्तृतीयादौ विभक्तौ परतः। आभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। अस्मै छात्राय कम्बलं देहि, अथो अस्मै शाटकमपि देहि। अस्य छात्रस्य शोभनं शीलम्, अथो अस्य प्रभूतं स्वम्। एषु वाक्येषु द्वितीयाः– आभ्याम्, अस्मै, अस्य शब्दा अन्वादेशविषयास्तेषु इदमोऽशादेशः। शित्वात् सर्वस्येदंशब्दस्य स्थाने अः। स्वरेऽकचि च विशेषः। साकच इदमोऽपि अशादेशो भवति। 'अनुदात्तौ सुप्पितौ' ( ३-१-४ ) इति भ्यामादिप्रत्ययोप्यनुदात्तः। 'ऊडिदं पदा०' ( ६-१-१७१ ) इत्यत्रान्तोदात्तादित्यधिकारादसर्वनामविभक्तिरन्वादेशे नोदात्ता भवति।

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ( २-४-३३ ) -३३

एतदः। त्रतसोः। त्रतसौ। च। अनुदात्तौ। त्रश्च तश्च त्रतसौ, तयोः ( इ० द्व० )। एतदोऽन्वादशविषयस्य अशादेशो भवत्यनुदात्तस्त्रतसोः परतः, तौ चापि त्रतसावनुदात्तौ भवतः। एतस्मिन् ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे। एतस्माच्छात्राच्छन्दोऽधीष्व, अथो अतो व्याकरणमप्यधीष्व। प्रकृतिप्रत्यययोरुभयोरनुदात्तविधानात् 'अत्र' 'अतः' इति पदे सर्वानुदात्ते भवतः।

  

## द्वितीयाटौस्स्वेनः ( २-४-३४ )

द्वितीयाटौस्सु । एनः । द्वितीया च, टा च, ओश्च=द्वितीयाटौसस्तेषु (इ० द्व०) । द्वितीया-टा-ओस विभक्तिषु परतः इदमेतदोरन्वादेशविषय योरेन आदेशो भवति अनुदात्तः । इदमः-इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय । अनेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम् । एतदः-एतं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमप्यध्यापय । एतेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । एतयोश्छात्रयोः शोभनं शीलम् । अथो एनयोः प्रभूतं स्वम् । ओसित्यविशेषादुभयोः षष्ठीसप्तम्योर्द्विवचनयोर्ग्रहणम् ।

## आर्द्धधातुके ( २-४-३५ ) -५७

अधिकारसूत्रमेतत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्धधातुके वेदितव्यम्, विषयसप्तम्येषा न परसप्तमी, तेनार्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद्यथाप्राप्तं प्रत्यया भवन्ति । अग्रे उदाहरिष्यामः ।

## अदो जग्धिर्ल्यप्ति किति ( २-४-३६ ) -४०

अदः । जग्धिः । ल्यप् । ति । किति । ल्यबिति लुप्तसप्तमीनिर्देशः । जग्धौ इकार उच्चारणार्थ । अद् ( =भक्षणे ) धातोर्जग्धादेशो भवत्यार्धधातुके ल्यपि तकारादौ च किति प्रत्यये परतः । ल्यपि-प्रजग्ध्य, विजग्ध्य । ति किति-जग्धः, जग्धवान् । प्रपूर्वाददः 'समानकर्तृकयोः पूर्वकाले' ( ३-४-२१ ) इति क्त्वाप्रत्ययः, 'कुगतिप्रादयः' ( २-२-१८ ) इति तत्पुरुषसमासः । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' ( ७-१-३७ ) इति क्त्वास्थाने ल्यबादेशस्तत्र प्रकृतसूत्रेण जग्धादेशेऽनुबन्धलोपे 'क्त्वातोसुन्कसुनः' ( १-१-४० ) इत्यव्ययसंज्ञायां सुलुकि सिद्धं प्रजग्ध्येति । निष्ठायां क्तक्तवतोः परतश्च जग्धादेशे 'झषस्तथोर्धोऽधः' ( ८-२-४० ) इति तस्य

धत्वे 'झलां जश् झशि' ( ८-४-५३ ) इति जग्धेर्धकारस्य दकारे, 'झरो झरि सवर्णे' ( ८-४-६५ ) इति दकारलोपे, सौ जग्धः, जग्धवानिति।

## लुङ्सनोर्घस्लृ ( २-४-३७ ) -४०

लुङ्सनोः। घस्लृ। लुङ् च संश्च लुङ्सनौ, तयोः ( इ० द्व० )। लुङि सनि च परतोऽदो घस्लादेशो भवति। लृकारः 'पुषादिद्युताद्यॢृदितः परस्मैपदेषु' ( ३-१-५५ ) इत्यङर्थम्। लुङि-अघसत्, अघसताम्, अघसन्। सनि-जिघत्सति, जिघत्सतः, जिघत्सन्ति। 'च्लि लुङि' (३-१-४३) इति च्लिप्रत्यये तस्य आर्धधातुकत्वाद् प्रकृतसूत्रेण अदो घसादेशे लस्य तिबादेशेऽनुबन्धलोपे 'इतश्च' (३-४-१००) इतीकारलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' ( ६-४-७१ ) इत्यडागमे च्लेरङादेशेऽनुबन्धलोपे च 'अघसत्' इति पदं साधु। द्विवचने तसस्तामादेशे अघसताम् इति बहुवचने झोऽन्तादेशे संयोगान्तलोपे चे 'अघसन्' इति रूपं साधु। अत्तुमिच्छतीति विग्रहे अदः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३-१-७ ) इति सनि, तस्यार्धधातुकसंज्ञायां सत्यांप्रकृतसूत्रेण अदो 'संन्यङोः' ( ६-१-९ ) इति द्विर्वचनेऽभ्यासकार्ये 'संन्यतः' ( ७-४-७९ ) इत्यभ्यासाकारस्येत्वे, 'कुहोश्चुः' ( ७-४-६२ ) इति घस्य झत्वे 'अभ्यासे चर्च' ( ८-४-५४ ) इति जश्त्वेन झस्य जकारे 'सः स्यार्द्धधातुके' ( ७-४-४९ ) इति सस्य तकारे 'जिघत्स' इति शब्दरूपस्य 'सनाद्यन्ता धातवः' ( ३-१-३२ )इति धातुसंज्ञायां लटि, तिपि शपि अनुबन्धलोपे 'अतोगुणे' ( ६-१-९७ ) इति पररूपैकादेशे सिद्धं 'जिघत्सति' इति। एवं द्विवचने 'जिघत्सतः' बहुवचने च 'जिघत्सन्ति' इति सिद्धम्।

## घञपोश्च ( २-४-३८ )

घञपोः। च। घञ् च अप् च=घञपौ ( इ० द्व० )। घञि, अपि च प्रत्यये परतोऽदो 'घस्लृ' आदेशो भवति। घञि-घासः। 'भावे'

( ३-३-१८ ) इति घञ्प्रत्ययः, तस्य 'आर्द्धधातुकं शेषः' ( ३-४-११४ ) इत्यार्धधातुकसंज्ञा। प्रकृतसूत्रेण अदो घसादेशे 'अत उपधायाः' ( ७-२-११६ ) इत्यंगस्योपधाया अतो वृद्धौ सौ रुत्वे विसर्गे घास इति साधु। अपि–प्रघसः। 'उपसर्गेऽदः' ( ३-३-५९ ) इत्युपसर्गपूर्वकाददोऽप्प्रत्यये पूर्ववद् घसादेशादौ सिद्धं प्रघस इति रूपम्।

## बहुलं छन्दसि ( २-४-३९ )

बहुलम्। छन्दसि। छन्दसि विषये बहुलमदो घस्लादेशो भवति। घस्तान्नूनम्। लङि प्रथमपुरुषद्विवचने तसस्तामादेशे शपो लुकि 'बहुलं छन्दस्यमाङ्योगेऽपि' (६-४-७५) इत्यडाभावे रूपम्। 'घसिभसोर्हलि च' ( ६-४-१०० ) इत्युपधालोपे न भवति बहुलग्रहणादेव, अथवा लुङि रूपमेतत् तत्र 'मन्त्रे घसह्वरणश०' २-४-८० इति च्लेर्लुक्। 'सग्धिः' इत्येतद् व्युत्पादितं (१-१-५७) सूत्रे, तत्रैव द्रष्टव्यम्। आत्ताम्। अत्रादेशो न भवति। लङि लुङि वा प्रथमपुरुषद्विवचने रूपमेतत्।

## लिट्यन्यतरस्याम् ( २-४-४० ) -४१

लिटि। अन्यतरस्याम्। लिटि परतोऽदोऽन्यतरस्यां घस्लादेशो भवति। जघास,, जक्षतुः, जक्षुः,। आद, आदतुः, आदुः। 'लिट् च' ( ३-४-११५ ) इति लिटः आर्धधातुकसंज्ञायां प्रकृतसूत्रेण वैकल्पिके घस्लादेशे तिपि, णलि, द्विर्वचने, अभ्यासकार्ये उपधावृद्धौ च 'जघास' इति पदं साधु, अनादेशपक्षे णलि द्विर्वचने 'अत आदेः' ( ७-४-७० ) इत्यभ्यासस्य दीर्घे, सवर्णदीर्घे च 'आद' इति रूपम्,। एवमतुसि उसि च क्रमेण आदतुः, आदुः, इति पदे साधू। 'जक्षतुः', 'जक्षुः' इत्यनयोः सिद्धिः १-१-५८ सूत्रे द्रष्टव्या।

## वेञो वयिः ( २-४-४१ )

वेञः। वयिः। वेञ् (=तन्तुसन्ताने) धातोर्वयिरादेशो भवति लिट्यन्य

तरस्याम्। इकार उच्चारणार्थः। उवाय, ऊयतुः, ऊयुः। लिटि वयादेशे द्विर्वचने च कृते 'लिट्यभ्यासस्योभयेषाम्' (६-१-१७) इत्यभ्यासस्य सम्प्रसारणम्। ऊयतुरिति अतुस्प्रत्ययस्य कित्त्वाद् द्विर्वचनात् पूर्वमेव 'ग्रहिज्यावयि०' (६-१-१६) इत्यादिना सम्प्रसारणम्। कित्प्रत्ययेषु परतः पक्षे 'वश्चास्यान्यतरस्यां किति' (६-१-३९) इति वयो वकारोऽन्तादेशः। 'लिटि वयो यः' (६-१-३८) इति च तत्र यकारस्य सम्प्रसारणप्रतिषेधः। तेन ऊवतुः, ऊवुः, ऊयतुः, ऊयुः इत्येवं रूपाणि साधूनि। वयादेशाऽभाव पक्षे णलि 'वेञः' (६-१-४०) इति सम्प्रसारण 'निषेधः,आदेच०' (६-१-४५) इत्येकारस्यात्वे 'आत औ णल' (७-१-३४) इति णल औत्वे, वृद्धौ कृतायां 'ववौ' इति।ववतुरित्यत्र 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः।

## हनो वध लिङि (२-४-४२) -४४

हनः। वधः। लिङि। वध इत्यविभक्तिको निर्देशः। हन् (=हिंसायाम्) धातोर्लिङि 'वध' इत्ययमादेशो भवति आर्धधातुके। अकारान्तोऽयमादेशः। वध्यात्, वध्यास्ताम्, वध्यासुः। 'लिङाशिषि' (३-४-११६) इत्याशीर्लिङ आर्धधातुकसंज्ञायां तत्र प्रकृतसूत्रेण हनो वधादेशे, तिबादेर्यासुडागमेऽनुबन्धलोपे, इकारलोपे सकारस्य संयोगा-दित्वात्, 'स्कोः संयोगाद्योरन्ते च' (८-२-२९) इति लोपे, अतो लोपः' (६-४-४८) इत्यकारलोपे सिद्धं 'वध्यात्' इति रूपम्। एवं वध्यास्ताम् इत्यत्र तसस्तामादेशः, वध्यासुः इत्यत्र च 'झेर्जुस्' (३-४-१०८) इति जुसादेशः।

## लुङि च (२-४-४३) -४४

लुङि च परतो हनो वध आदेशो भवति। अवधीत्, अवधिष्टाम्, अवधिषुः। 'अवधीत्' इत्येतद् व्युत्पादितं १-१-५६ सूत्रे। उत्तर-

योर्द्वयोः 'आदेशप्रत्यययोः' (८-३-५९) इति सस्य षत्वं, 'ष्टुनाष्टुः' (८-४-४०) इति तस्य टत्वं 'सिजभ्यस्तविदिभ्यश्च' (३-४-१०९) इति झेर्जुसादेशश्च विशेषः।

## आत्मनेपदेष्वन्यतरस्याम् ( २-४-४४ )

आत्मनेपदेषु। अन्यतरस्याम्। आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध आदेशो भवति। आवधिष्ट, आवधिषाताम्, आवधिषत। आहत, आहसाताम्, आहसत। 'आङोयमहनः' (१-३-२८) इत्यात्मनेपदम्। सिचि इडभावे 'हनः सिच्' इति कित्त्वम्। ततो 'अनुदात्तोपदेश॰' (६-४-३७) इत्यनुनासिकलोपः, 'ह्रस्वादङ्गात्' (८-२-२७) इति सकारलोपः।

## इणो गा लुङि ( २-४-४५ ) -४७

इणः। गाः। लुङि। इण् (=गतौ) धातोर्गाऽऽदेशो भवति लुङि परतः। अगात्, अगाताम्, अगुः। लुङि गादेशे तिपि सिचि अडागमेऽनुबंधलोपे 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु (२-४-७७) इति सिच्लुकि सिद्धम् 'अगात्' इति रूपम्। द्विवचने तसस्ताम्, बहुवचने च झेर्जुसादेशो विशेषः। लुङीति वर्त्तमाने पुनर्लुङ् ग्रहणम् 'आत्मनेपदेष्वन्यतरस्याम्' इत्यस्य निवृत्त्यर्थम्। तेन लुङि 'अगात्' इति परस्मैपदवद् 'अगायि' इत्यात्मनेपदेऽपि नित्यमिणो गादेशो भवति।

## णौ गमिरबोधने ( २-४-४६ ) -४८,४७

णौ। गमिः। अबोधने। न बोधनम् अबोधनं, तस्मिन् (न॰ त॰) 'णौ' इति णिच उत्सृष्टानुबन्धकस्य सप्तम्यां ग्रहणम्, णौ परत इणोऽबोधनार्थस्य गमादेशो भवति। इकार उच्चारणार्थः। गमयति, गमयतः, गमयन्ति। णिजन्तस्य गमः 'सनाद्यन्ता धातवः' (३-१-३२) इति धातुसं

ज्ञायां सत्यां 'वर्तमाने लट्' (३-२-१२३) इति लटि, तिपि, शपि, अंगस्य गुणेऽयादेशे च रूपं गमयतीति।

## संनि च ( २-४-४७ ) -४८

सनि च परत इणोऽबोधनार्थस्य गमादेशो भवति। जिगमिषति, जिगमिषतः, जिगमिषन्ति। सन्नन्तस्य पूर्ववद् द्विर्वचनाभ्यासेत्वादिकार्ये सिद्धं रूपम्।

## इङश्च ( २-४-४८ ) -५१

इङः। च। इङ् (=अध्ययने) धातोः सनि परतो गमिरादेशो भवति। अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते। अधिपूर्वादिङः सनि गमादेशे 'अज्झनगमां सनि' (६-४-१६) इत्यंगस्य दीर्घे, द्वित्वादिकार्ये, 'नश्चापदान्तस्य झलि' (८-३-२४) इति मोऽनुस्वारे, सन्नन्तस्य धातुसंज्ञायां लटि 'पूर्ववत्सन' (१-३-६२) इत्यात्मनेपदे ते प्रत्यये शपि पररूपैकादेशे, टित एत्वे 'अधिजिगांसते' इति साधु। एवमग्रेऽपि।

## गांङ् लिटि ( २-४-४९ ) -५०

इङो गाङादेशो भवति लिटि परतः। अधिजगे, अधिजगाते, अधिजगिरे। अधिपूर्वादिङः परोक्षानद्यतनभूते लिटि गाङादेशे तप्रत्यये तत्स्थाने 'लिटस्तझयोरेशिरेच्' (३-४-८१) इत्येकारादेशे तस्य 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (१-२-१) इति ङित्वाद् 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपे, 'द्विर्वचनेऽचि' (१-१-५९) इति स्थानिवद्भावे, द्विर्वचनेऽभ्यासकार्ये च सिद्धम् 'अधिजगे' इति। एवमग्रेपि।

## विभाषा लुङ्लृङोः ( २-४-५० ) -५१

लुङ् च लृङ् च लुङ्लृङौ, तयोः (इ० द्व०)। लुङि लृङि च परत

इङो विभाषा गाङादेशो भवति। लुङि—अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। न च भवति-अध्यैष्ट, अध्यैषाताम्, अध्यैषत। लृङि—अध्यगीष्यत अध्यगीष्येताम् अध्यगीष्यन्त। पक्षे अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त। आदेशपक्षे 'गाङ्कुटादिभ्यः' (१-२-१) इति सिचो ङित्वाद् 'घुमास्थागापाजहातिसां हलि' (६-४-४६) इत्याकारस्य ईत्वे सस्य मूर्धन्ये ष्टुत्वे च 'अध्यगीष्ट' इत्यादि साधु। 'अध्यगीषत' इत्यत्र 'आत्मनेपदेष्वनतः' (७-१-५) इति झोऽतादेशो विशेषः।

## णौ च सँश्चङोः ( २-४-५१ )

सन् च चङ् च=सँश्चङौ तयोः (इ० द्व०)। 'नश्छव्यप्रशान्' (८-३-७) इति नकारस्य रुत्वम्, 'अत्रानुनासिकः पूर्वस्य तु वा' (८-३-२) इति रोः पूर्वस्यानुनासिकः, रुस्थाने विसर्जनीयः विसर्गस्य सकारः, सस्य च श्चुत्वे शत्वम्। इङ्धातोः णौ सन्परे, चङ्परे च परतोविभाषा गाङादेशो भवति। णौ सनि-अधिजिगापयिषति, अध्यापिपयिषति। णौ चङि अध्यजीगपत्, अध्यापिपत्। अनादेशपक्षे 'क्रीङ्जीनां णौ' (६-१-४८) इत्यात्वम्। 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ' (७-३-३६) इति चोभयत्र पुगागमः। 'अध्यजीगपत्' इत्यत्र अधिपूर्वाद्णिजन्तादिङो लुङि, तिपि गाङादेशे पुगागमे 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' (३-१-४८) इति च्लेश्चङि 'णौ चङ्युपधाया ह्रस्वः' (७-४-१) इति ह्रस्वे, 'णेरनिटि' (६-४-५१) णिलोपे, 'चङि' (६-१-११) इति द्विर्वचने, अभ्यासकार्ये 'सन्वल्लघुनि चङ्परेऽनग्लोपे' (७-४-९३) इति सन्वद्भावे, 'सन्यतः' (७-४-७९) इतीत्वे, दीर्घो, लघोः' (७-४-९४) इति दीर्घे सिद्धं रूपम्।

## अस्तेर्भूः ( २-४-५२ )

अस्तेः। भूः। अस् (=भुवि) धातोर्भूरादेशो भवत्यार्धधातुके।

  

भविता, भवितुम्, भवितव्यम्। क्रमेण तृच्तृन्तासिषु तुमुनि तव्यति च आर्धधातुकप्रत्ययेषु असो भ्वादेशे, अंगस्य गुणेऽवादेशे च रूपाणि।

## ब्रुवो वचिः ( २-४-५३ )

ब्रुवः। वचिः। ब्रूञ् (=व्यक्तायां वाचि) धातोर्वचिरादेशो भवत्यार्धधातुकविषये। इकार उच्चारणार्थः। वक्ता, वक्तुम्, वक्तव्यम्। सर्वत्र झलादिप्रत्ययेषु वचः 'चोः कुः' (८-२-३६) इति कवर्गादेशः।

## चक्षिङः ख्याञ् ( २-४-५४ ) -५५

चक्षिङ (=व्यक्तायांवाचि) धातोः ख्याञादेशो भवत्यार्धधातुके। ञित्करणं 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (१-३-७२) इत्यात्मनेपदार्थम्। आख्याता, आख्यातुम्, आख्यातव्यम्।

## वा लिटि ( २-४-५५ )

लिटि परतश्चक्षिङो वा ख्याञादेशो भवति। आचख्यौ, आचख्यतुः, आचख्युः। न च भवति आचचक्षे, आचचक्षाते, आचचक्षिरे। आदेशपक्षे परस्मैपदे णलि 'आत औ णलः' (७-१-३४) इति औत्वे आचख्याविति।

## अजेर्व्यघञपोः ( २-४-५६ ) -५७

अजेः। वी। अघञपोः। घञ् च अप् च=घञपौ, (इ० द्व०)। न घञपौ अघञपौ, तयोः (न० त०)। अज (=गतौ) धातोर्वी आदेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा। प्रवायकः, प्रवयणीयः। ण्वुलि, अनीयरि च रूपे। आङ्गौ वृद्धिगुणौ, आयायादेशाश्च भवन्ति।

## वा यौ ( २-४-५७ )

'यौ' इति उत्सृष्टानुबन्धकस्य ल्युटः सप्तम्यन्तस्य ग्रहणम्। यौ परतो-

ऽजेर्वा वीत्ययमादेशो भवति। प्रवयणो दण्डः, प्राजनो दण्डः। प्रवयणमानय, प्राजनमानय। व्यादेशपक्षे आंगवर्णकार्ये योरनादेशे णत्वे चोपपन्नं रूपम्।

**ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ( २-४-५८ ) -६१,-८३**

ण्यक्षत्रियार्षञितः। यूनि। लुक्। अणिञोः। ञ् इत् यस्य स ञित् ( बहु० )। ण्यश्च, क्षत्रियश्च, आर्षश्च, ञिच्च=ण्यक्षत्रियार्षञित् ( स० द्व० ), तस्मात्। अण् चेञ् च=अणिञौ, तयोः ( इ० द्व० )। ण्यान्तात् क्षत्रियवाचिनः, ऋषिवाचिनः, ञितश्च गोत्रप्रत्ययान्तात् परयोरणिञोर्यूनि ( =युवापत्ये ) लुग् भवति। 'अपत्यं पौत्रप्रभृतिगोत्रम्' ( ४-१-१६२ ) इति पौत्रप्रभृत्यपत्यं गोत्रपदार्थः। ण्यान्तात् इञो लुकि-कुरोर्गोत्रापत्यं पुमानित्यर्थे 'कुर्वादिभ्यो ण्यः' ( ४-१-१५१ ) इति कुरुशब्दाण्ण्यप्रत्यये, आदिवृद्धौ भस्योकारस्य गुणे वान्तादेशे कौरव्य इति जाते, तस्मात् यूनि 'अत् इञ्' ( ४-१-९५ ) इति इञ्प्रत्ययः, तस्य प्रकृतसूत्रेण लुकि-कौरव्यः पिता, कौरव्यः पुत्रः इति प्रयोगो साधू। क्षत्रियात्-श्वफल्कस्य गोत्रापत्यं पुमानिति विग्रहे श्वफल्कशब्दाद् अन्धकवंशाख्याद्-'ऋष्यन्धकवृष्णिकुरुभ्यश्च' ( ४-१-१४४ ) इत्यणि श्वाफल्क इति, तस्माद् युवापत्ये पूर्ववदिञ्, तस्यानेन लुकि श्वाफल्कः पिता, श्वाफल्कः पुत्रः इति। आर्षात्-वशिष्ठस्य गोत्रापत्यं पुमानिति विग्रहे वशिष्ठशब्दात् 'ऋष्यन्धक०' इत्यनेनाण्, ततश्च युवापत्ये इञ्, तस्य लुकि-वाशिष्ठः पिता, वाशिष्ठः पुत्रः इति। ञितः-विदस्य गोत्रापत्यं पुमानिति विग्रहे बिदशब्दात् 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' ( ४-१-१०४ ) इत्यञि बैदः, ततश्च यूनीञ्, तस्य लुकि बैदः पिता, बैदः पुत्र। अणः खल्वपि-तिकस्य गोत्रापत्यं पुमानिति विग्रहे तिकशब्दात् 'तिकादिभ्यः फिञ्' ( ४-१-१५४ ) इति फिञि, फस्यायनादेशे तैकायनिः, ततो यूनि 'प्राग्दीव्यतोऽण्' ( ४-१-८३ ) इत्यण्, तस्यानेन लुकि तैकायनिः पिता, तैकायनिः पुत्रः।

## पैलादिभ्यश्च ( २-४-५६ )

पैलादिभ्यः। च। पैल आदिर्येषां ते पैलादयः, तेभ्यः ( बहु० )। पैल इत्येवमादिभ्यो युवप्रत्ययस्य लुग् भवति। पीलाशब्दाद् गोत्रापत्ये 'पीलाया वा' ( ४-१-११८ ) इति वैकल्पिकेऽणि पैलः, तस्माद् यूनि 'अणो द्व्यचः' ( ४-१-१५६ ) इति फिञ्, तस्यानेन लुकि पैलः पिता, पैलः पुत्रः। शालङ्किः। सात्यकिः। सात्यकामिः। दैविः। औदभाज्जिः। इञन्तेभ्यः फको लुक्।

## इञः प्राचाम् ( २-४-६० )

प्राचां पूर्वदेशनिवासिनां ये गोत्रवाचिन इञन्ताः शब्दास्तेभ्यो यूनि विहितस्य प्रत्ययस्य लुग् भवति। पन्नं=प्राप्तमगारं येन सः पन्नागारः। पन्नागारस्य गोत्रापत्यं पुमानिति विग्रहे 'अत इञ्' ( ४-१-९५ ) इतीञि पान्नागारिः, तस्यापत्यं युवेत्यर्थे 'यञिञोश्च' ( ४-१-१०१ ) इति फक्, तस्यानेन लुकि-पान्नागारिः पिता, पान्नागारिः पुत्रः। एवं मन्थरैषणस्य गोत्रापत्यं पुमान्-मान्थरैषणिः। मान्थरैषणिः पिता, मान्थरैषणिः पुत्रः।

## न तौल्वलिभ्यः ( २-४-६१ )

'तौल्वलि' इत्येवमादिभ्यः शब्देभ्यः परस्य युवप्रत्ययस्य लुग् न भवति। तौल्वलिः पिता, तौल्वलायनिः पुत्रः। इञन्ताद् तौल्वलि-शब्दाद् यूनि 'यञिञोश्च' इति फक्प्रत्ययः। एवं धारणिः, धारणायनः। रावणिः, रावणायनः। पारखिः, पारखायनः। दैलीपिः, दैलीपायनः। दैवलिः, दैवलायनः।

## तद्राजस्य बहुषु तेनैवास्त्रियाम् ( २-४-६२ ) -७०,६४,६४,६४

तद्राजस्य। बहुषु। तेन। एव। अस्त्रियाम्। न स्त्री=अस्त्री, तस्याम् ( न० त० )। 'ते तद्राजाः' ( ४-१-१७४ ), 'ञ्यादयस्तद्राजाः' ( ५-३-

  

११९ ) इति येषां प्रत्ययानां तद्राजसंज्ञां वक्ष्यति तेषामिह ग्रहणम्। जातावेकवचनम्। तद्राजसंज्ञस्य प्रत्ययस्य बहुषु वर्त्तमानस्य अस्त्रीलिंगस्य लुग् भवति, तेनैव चेत् तद्राजेन कृतं बहुत्वं भवति। अङ्गाः, वङ्गाः, पुण्ड्राः, मगधाः, लोहध्वजाः, व्रीहिमन्तः। 'द्व्यञ्मगधकलिङ्गसूरमसादण्' (४-१-१७०) इति जनपदशब्दात् क्षत्रियाभिधायिनो द्व्यचो मगधात् कलिङ्गात्, सूरमसाच्चाण्प्रत्यये कृते तस्य 'ते तद्राजाः' इति तद्राजसंज्ञायां प्रथमाबहुवचने चानेन लुकि अंगाः, बंगाः, इत्यादि। पूगवाचिनो लोहध्वज शब्दात् 'पूगाञ्ञ्योऽग्रामणीपूर्वात् (५-३-११२) इति स्वार्थे ञ्यप्रत्यये तस्य 'ञ्यादयस्तद्राजाः' इति तद्राजसंज्ञायां जसविभक्तौ च परतः प्रकृतसूत्रेण लुकि लोहध्वजा इति। एवं 'व्रातच्फञोरस्त्रियाम्' (५-३-११३) इति व्रातवाचिनो व्रीहिमत् शब्दात् स्वार्थे विहितस्य ञ्यप्रत्ययस्य तद्राजसंज्ञायां सत्यां तस्यैव च बहुवचने जसि परतो लुकि उगिन्निमित्तकनुमागमे कृते व्रीहिमन्त इति रूपं साधु।

## यस्कादिभ्यो गोत्रे ( २-४-६३ ) -६९

यस्कादिभ्यः। गोत्रे। यस्क आदिर्येषां ते यस्कादयः, तेभ्यः ( बहु० )। यस्कादिभ्यः परतो 'गोत्रप्रत्ययस्य बहुषु वर्त्तमानस्यास्त्रीलिंगस्य लुक् भवति तेनैव चेद्गोत्रप्रत्ययेन कृतं बहुत्वं भवति। यस्काः, लभ्याः, दुह्याः, अयःस्थूणाः तृणकर्णाः। गोत्रापत्ये योऽण्प्रत्ययस्तस्य बहुषु जसादौ लुकि सिद्धमभीष्टरूपम्।

## यञञोश्च ( २-४-६४ )

यञञोः। च। यञ् च, अञ् च=यञञौ, तयोः (इ० द्व०)। यञञोर्गोत्रप्रत्यययोर्बहुषु, वर्त्तमानयोरस्त्रीलिंगयोर्लुग् भवति। यञः-गर्गाः, वत्साः। 'गर्गादिभ्यो यञ्' (४-१-१०५) इति विहितस्य यञो बहुवचने सिद्धमिष्टरूपम्। अञः खल्वपि-बिदा उर्वाः 'अनृष्यानन्तर्ये बिदा-

दिभ्योऽञ्' (४-१-१०४) इत्यनेन गोत्रापत्येऽञ् तस्यानेन बहुवचने लुक्।

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च (२-४-६५)

अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यः। च। अत्रिश्च भृगुश्च कुत्सश्च, वसिष्ठश्च, गोतमश्च, अङ्गिराश्च=अत्रि...अङ्गिरसः, तेभ्यः (इ० द्व०)। अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति। अत्रयः, भृगवः, कुत्साः, वसिष्ठाः, गोतमाः, अङ्गिरसः। 'इतश्चानिञः' (४-१-१२२) इत्यत्रिशब्दाद् गोत्रापत्ये ढक्प्रत्ययः, तस्य बहुवचने लुकि-अत्रयः। भृग्वादिभ्यः 'ऋष्यन्धक०' (४-१-११४) इत्यण्, तस्य लुकि-भृगवः, कुत्साः, इत्यादि।

## बह्वच इञः प्राच्यभरतेषु (२-४-६६)

बह्वचः। इञः। प्राच्यभरतेषु। बह्वोऽचो यस्मिन् स बह्वच्, तस्मात् (बहु०)। प्राक्षुभवाः प्राच्याः। प्राच्याश्च भरताश्च=प्राच्यभरतास्तेषु (इ० द्व०)। बह्वचः प्रातिपदिकात् प्राच्यगोत्रे, भरतगोत्रे च विहितस्येञो बहुषु लुग् भवति। प्राच्यगोत्रे पन्नागाराः, मन्थरेषणाः। भरतगोत्रे-युधिष्ठिराः, अर्जुनाः। 'अत इञ्' (४-१-६५) इति गोत्रे विहितस्येञो बहुवचने लुकि निष्पन्नानि रूपाणि।

## न गोपवनादिभ्यः (२-४-६७)

गोपवन आदिर्येषां ते गोपवनादयः, तेभ्यः (बहु०)। गोपवनादिभ्यः परस्य प्रत्ययस्य लुङ् न भवति। गौपवनः, गौपवनौ, गौपवनाः। शैग्रवाः। बैन्दवाः। भाजनाः। बिदाद्यन्तर्गता गोपवनादयः, बिदादिभ्यस्तु 'अनृष्यानन्तर्ये' (४-१-१०४) इत्यञ् विहितस्तस्य बहुषु 'यञञोश्च' (२-४-६४) इति लुक्प्राप्तः, स एवेह गोपवनाद्यंशे प्रतिषिध्यते।

## तिककितवादिभ्यो द्वन्द्वे ( २-४-६८ )

तिककितवादिभ्यः। द्वन्द्वे। तिकश्च कितवश्च तिककितवौ ( इ० द्व० ); तौ आदी येषां ते तिककितवादयः, तेभ्यः ( बहु० )। तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वसमासे गोत्रप्रत्ययस्य बहुषु लुग् भवति। तैकायनयश्च, कैतवायनयश्च=तिककितवाः। वाङ्खरयश्च भाण्डीरथयश्च= वङ्खरभाण्डीरथाः। तिककितवशब्दाभ्यां गोत्रे 'तिकादिभ्यः फिञ्' ( ४-१-१५४ ) इति फिञ्, तस्य द्वन्द्वसमासे बहुवचनविवक्षायां प्रकृतसूत्रेण लुक्। वङ्खरभाण्डीरथाः इत्यत्र इञो लुक्। औपकायनाश्च लामकायनाश्च=उपकलमकाः-अत्र फको लुक्। पाफकयश्च नारकयश्च= पफकनरकाः-इतीञो लुक्।

## उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ( २-४-६९ )

उपकादिभ्यः। अन्यतरस्याम्। अद्वन्द्वे। उपकः आदिर्येषां ते उपकादयः, तेभ्यः ( बहु० )। न द्वन्द्वोऽद्वन्द्वः, तस्मिन् ( न० त० )। उपकादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति अन्यतरस्यां द्वन्द्वे चाद्वन्द्वे च। उपकलमकाः, भ्रष्टकपिष्ठलाः। कृष्णाजिनकृष्णसुन्दराः। द्वन्द्वे पूर्वसूत्रेणैव नित्यं लुग् भवति। अद्वन्द्वे त्वनेन विकल्पः। उपकाः, औपकायनाः। लमकाः, लामकायनाः। भ्रष्टकाः, भ्राष्टकयः। कपिष्ठलाः, कापिष्ठलयः। कृष्णाजिनाः, कार्ष्णाजिनयः। कृष्णसुन्दराः, कार्ष्णसुन्दरयः। उपकलमकौ नडादौ पठ्येते ताभ्यां गोत्रापत्ये 'नडादिभ्यः फक्' ( ४-१-९९ ) इति विहितस्य फकः प्रकृतसूत्रेण विकल्पेन लुक्। भ्रष्टकादिभ्यः 'अत इञ्' ( ४-१-९५ ) इति विहितस्येञोऽपि वैकल्पिको लुक्। एवमन्येष्वपि यस्माद्यः प्रत्ययो भवति तस्य बहुष्वद्वन्द्वे विकल्पेन लुग् वेदितव्यम्।

### आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ( २-४-७० )

आगस्त्यकौण्डिन्ययोः । अगस्तिकुण्डिनच् । आगस्त्यश्च कौण्डिन्यश्च आगस्त्यकौण्डिन्यौ, तयोः ( इ० द्व० ) । अगस्तिश्च कुण्डिनच्च=अगस्तिकुण्डिनच् ( स० द्व० ) । आगस्त्यकौण्डिन्ययोरणो यञश्च बहुषु लुग् भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासंख्यम् अगस्तिकुण्डिनच् इत्यादेशौ भवतः । अगस्तयः, कुण्डिनाः । आगस्त्यशब्दात् 'ऋष्यन्धक०' इत्यनेन विहितस्याणो लुग् भवति, कुण्डिनशब्दात्तु गर्गादित्वात्प्राप्तस्य यञो लुक् ।

### सुपो धातुप्रातिपदिकयोः ( २-४-७१ )

सुपः । धातुप्रातिपदिकयोः । धातुश्च प्रातिपदिकं च=धातुप्रातिपदिके तयोः ( इ० द्व० ) । सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग् भवति । धातोः–पुत्रीयति, घटीयति, आत्मनः पुत्रमिच्छतीत्यर्थे पुत्रशब्दात् 'सुप आत्मनः क्यच्' ( ३-१-८ ) इति क्यचि 'पुत्र+अम् क्यच्' इत्यवस्थायां 'सनाद्यन्ता धातवः' ( ३-१-३२ ) इति क्यजन्तस्य धातुसंज्ञायां प्रकृतसूत्रेणामो लुकि 'क्यचि च' ( ७-४-३३ ) इत्यकारान्तांगस्येत्वे 'पुत्रीय' इत्येतस्मात् लटि, तिपि शपि पुत्रीयति इति रूपं साधु । घटीयतीत्यत्र 'उपमानादाचारे' ( ३-१-१० ) इति क्यच्, पूर्ववत् कार्यं रूपम् । प्रातिपदिकस्य कष्टश्रितः, राजपुरुषः । कष्टं श्रितः, राज्ञः पुरुषः इति लौकिकविग्रहे कष्ट+अम्+श्रित+सुँ, राजन्+ङस्+पुरुष+सु इत्यलौकिकविग्रहे च यथाक्रमं 'द्वितीया श्रितातीत०' ( २-१-२४ ) 'षष्ठी' ( २-२-८ ) इति तत्पुरुषसमासे, कृत्तद्धितसमासाश्च ( १-२-४६ ) इति प्रातिपदिकसंज्ञायां प्रकृतसूत्रेण सुपो लुकि सौविभक्तावुपपन्नमिष्टं रूपम् ।

### अदिप्रभृतिभ्यः शपः ( २-४-७२ ) -७३

अदिप्रभृति येषां ते अदिप्रभृतयः तेभ्यः ( बहु० ) अदादिभ्यो

धातुभ्यः शपो लुग् भवति । अत्ति, हन्ति, द्वेष्टि, 'कर्त्तरि शप्' (३-१-६८) इति विहितस्य शपोऽनेन लुक् तिपि दकारस्य चर्त्वेन तकारे 'अत्ति' इति रूपं साधु। द्वेष्टि-इत्यत्र 'पुगन्तलघूपधस्य च' (७-३-८६) इत्यंगस्य गुणः, 'ष्टुना ष्टुः' (८-४-४१) इति तिपस्तकारस्य टकारः।

## बहुलं छन्दसि ( २-४-७३ ) -७४

बहुलम् । छन्दसि । छन्दसि विषये शपो बहुलं लुग् भवति । वृत्रं हनति । अहिः शयते । हन्शीङ्धात्वोरदादित्वाच्छपो लुक् प्राप्तः, स एव बाहुलकाद् न भवति । अन्येभ्यश्च भवति । त्राध्वं नो देवाः । त्रैङ् (=पालने) धातुर्भ्वादौ पठ्यते ।

## यङोऽचि च ( २-४-७४ )

यङः । अचि । च । यङोऽचि प्रत्यये परतो बहुलं लुग् भवति । लोलुवः, पोपुवः, सनीस्रंसः, दनीध्वंसः, । पुनः पुनः लुनाति-लोलूयते । 'लोलूय' इत्यादिभ्यो यङन्तेभ्यो धातुभ्यो 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३-१-१३४) इत्यच्, तस्मिन् परतोऽनेन यङ्लुकि 'अचिश्नुधातु०' (६-४-७७) इत्युवर्णान्तस्योवङादेशे सौ-लोलुवः, पोपुवः इति । 'नीग्वञ्चुस्रंसुध्वंसु०' (७-४-८४) इत्यचि परतः स्रंसु-ध्वंसु (=अवस्रंसने) धात्वोर्यङ्लुक्यभ्यासस्य नीगागमे-सनीस्रंसः, दनीध्वंस इति । अनचि खल्वपि-शाकुनिको लालपीति, दुन्दुभिर्वावदीति । लप् (=व्यक्तायां वाचि), वद (=व्यक्तायांवाचि) धातुभ्यां परस्य यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात्, द्वित्वे, 'दीर्घोऽकितः' (७-४-८३) इत्यभ्यासस्य दीर्घे, लटि 'चर्करीतञ्च' इति सूत्रेणादादित्वे परस्मैपदे च तिपि शपि, शपो लुकि, 'यङो वा' (७-३-९४) इतीडागमे सिद्धं रूपद्वयम् ।

## जुहोत्यादिभ्यः श्लुः ( २-४-७५ ) -७६

जुहोति आदिर्येषां ते जुहोत्यादयः, तेभ्यः (बहु०)। हु (=दानादनयो-

  

दाने च ) इत्यादिभ्यो धातुभ्यः परस्य शपः श्लुर्भवति। जुहोति, बिभर्त्ति, नेनेक्ति। शपः श्लुभावे प्रत्ययादर्शनं धातुद्विर्वचनं च प्रयोजनम्। तत्र 'श्लौ' इति द्विर्वचनेऽभ्यासकार्ये 'सार्वधातुकार्धधातुकयोः', ( ७-४-८४ ) इत्यंगस्य गुणे, 'निजां त्रयाणां गुणः श्लौ' ( ७-४-७५ ) 'भृञामित्' ( ७-४-७६ ) इत्यभ्यासस्य यथायोगं गुणे, इत्वे, चुत्वे जश्त्वे च, सिद्धानि रूपाणि।

## बहुलं छन्दसि ( २-४-७६ )

बहुलम्। छन्दसि। छन्दसि विषये बहुलं शपः श्लुर्भवति। दाति प्रियाणि, धाति प्रियाणि। जुहोत्यादित्वात् प्राप्तः श्लुर्बहुलवचनान्न भवति। पूर्णां विवष्टि, जनिमा विवक्ति। वश् (=कान्तौ ) धातोरा ङ्पूर्वकाद्वचेश्च आदादिकत्वाच्छपो लुकि प्राप्ते बहुलग्रहणात् तत्स्थाने श्लौ, द्विर्वचने, 'बहुलं छन्दसि' ( ७-४-७८ ) इत्यभ्यासस्येत्वे षत्वष्टुत्व-कुत्वेषु विवष्टि , आविवक्ति इति रूपे सिद्धे।

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ( २-४-७७ ) -७६,-७८

गातिश्च स्थाश्च घुश्च पाश्च भूश्च=गातिस्थाघुपाभुवः, तेभ्यः ( इ० द्व० )। गातीति इणो लुङि गादेशस्य ग्रहणम्। तस्मात् स्थाधातोः, घुसंज्ञकेभ्यः, पा ( =पाने भौवादिकः ) धातोः, भूधातोश्च परस्य सिच्-प्रत्ययस्य लुग् भवति परस्मैपदेषु। अगात्, अस्थात्, अदात्, अधात्, अपात्, अभूत्।

## विभाषा घ्राधेट्शाच्छासः ( २-४-७८ ) -७९

घ्राश्च धेट् च शाश्च छाश्च साश्च घ्राधेट्शाच्छासं, तस्मात्, छान्दस अकारलोपः (स० द्व०)। घ्रा (=गन्धोपादाने) धेट् (=पाने) शो (=तनूकरणे) छो (=छेदने ), षो ( =अन्तकर्मणि ) धातुभ्यः परस्य सिचो विभाषा लुग् भवति परस्मैपदेषु। घ्रा-अघ्रात्, अघ्रासीत्। धेट्-अधात्, अधासीत्।

शा-अशात्, अशासीत् । छा-अच्छात्, अच्छासीत् । सा-असात्, असासीत् । 'आदेच उपदेशेऽशिति' (६-१-४५) इत्येजन्तानामात्वम् । अलुक्पक्षे 'अस्तिसिचोऽपृक्ते' ( ७-३-९६ ) इतीडागमः । 'यमरमनमातां सक् च' ( ७-२-७३ ) इति सगिटौ च । 'इट ईटि' (८-२-२८) इति सलोपः ।

## तनादिभ्यस्तथासोः ( २-४-७९ )

तनादिभ्यः । तथासोः । तनादिर्येषां ते तनादयः, तेभ्यः ( बहु० ) । तश्च, थास्च, तथासौ, तयोः ( इ० द्व० ) । तनादिभ्य उत्तरस्य सिचस्तथासोः परतो विभाषा लुग् भवति । अतत, अतथाः । अतनिष्ट, अतनिष्ठाः । असात, असाथाः । असनिष्ट, असनिष्ठाः । थासः साहचर्यात् 'त' इत्यात्मनेपदस्य प्रथमपुरुषैकवचनस्य ग्रहणम् । अलुक्पक्षे इडागमे षत्वे, ष्टुत्वे च अतनिष्ट इत्यादि रूपं साधु ।

## मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः (२-४-८०) -८१

मन्त्रे । घस····जनिभ्यः । लेः । 'घसह्वर०' इत्यत्रेतरेतरद्वन्द्वसमासः । मन्त्रविषये घस-ह्वर-वृ-दह-आत्-वृज्-कृ-गमि-जनिभ्यः उत्तरस्य लेर्लुग भवति । 'लेः' इति च्लिप्रत्ययस्य ग्रहणम् । घस-अक्षन्नमीमदन्त पितरः[1] । अक्षन्निति व्युत्पादितं १-१-५८ सूत्रे । ह्वर-माह्वर्मित्रस्य त्वम् । ह्वृ (कौटिल्ये) धातोर्लुङि च्लौ सिपि लेर्लुकि,गुणे, माङ्योगादडागमनिषेधे 'हल्ङ्याप्०' ( ६-१-६८ ) इति सलोपे रेफस्य विसर्गः । णश-प्रणङ्मर्त्यस्य[2] । प्रपूर्वाद् णश (=अदर्शने)धातोर्लुङ्, तिप्, च्लेर्लुक्, तकारलोपः 'नशेर्वा' (८-२-६३) इति कुत्वम्, 'उपसर्गादसमासेऽपि णोपदेशस्य' (८-४-१४) इति णत्वं 'बहुलं छन्दस्यमाङ्-योगेऽपि (६-४-७५) इत्यडभावः । वृ-सुरुचोवेन आवः[3] । 'वृ' इति-वृङ् वृञोः सामान्येन ग्रहणम् । लुङ् सिप्, गुणः, सिप्लोपः, 'छन्दस्यपि दृश्यते' ( ६-४-७३ ) इत्याडागमः । दह-मा न आधक्[4] । दह (=भस्मी-

---

१—ऋग्वेद १-८२-१ । २—ऋ० १-१८-३ । ३—यजु० १३।३ । ४—ऋ० ६।६१।१४ ।

करणे ) इत्यस्माल्लुङ् तिप्, च्लेर्लुक्, हस्य घत्वं, भष्भावः, आडागमः,
संयोगान्तलोपः, चर्त्वं च। आत्-आप्रा द्यावापृथिवी अन्तरिक्षम्[5]। प्रा
( =पूरणे ) इत्यस्मात् लुङ्, सिप्, च्लेर्लुक्, सस्य विसर्गः। वृज्-मानो[6]
अस्मिन् महाधने परावर्क्। वृजी (=वर्जने) धातोस्तिप्, लघूपधगुणः
हल्ङ्यादिना तकारलोपः। कृ-अक्रन् कर्म कर्मकृतः[7]। डुकृञ् ( करणे )
धातोः प्रथमपुरुषबहुवचने च्लेर्लुक्, झोऽन्तादेशः, यणादेशः, संयोगान्त-
लोपश्च। गमि-अग्मन्[8]। गम्लृ ( गतौ ) धातोर्झेः पूर्ववदन्तादेशादि
कार्यम्। जनि-अज्ञत वा अस्य दन्ताः[9]। 'आत्मनेपदेष्वनतः' ( ७-१-५ )
इति झोऽदादेशः, उपधालोपश्च।

## आमः ( २-४-८१ )

आमः परस्य लेर्लुग् भवति। सामर्थ्यादत्र 'लेः' इत्यनेन लिटो
ग्रहणम्, च्लेरुत्तरमाम्-प्रयोगाभावात्। ईहांचक्रे, ऊहांचक्रे, ईक्षांचक्रे।
लिटि परत एव 'इजादेश्च गुरुमतोऽनृच्छः' ( ३-१-३६ ) इत्याम्प्रत्यय
विधानात् लिटोऽनेन लुक्। प्रत्ययलक्षणेन 'कृञ्चानुप्रयुज्यते लिटि' (३-१-
४० ) इति कृञोऽनुप्रयोगः

## अव्ययादाप्सुपः ( २-४-८२ )

-८४

अव्ययात्। आप्सुपः। आप् च सुप् च=आप्सुप्, तस्य ( स०
द्व० )। अव्ययादुत्तरस्यापः सुपश्च लुग् भवति। आपः-तत्र शालायाम्।
तत्रयत्रशब्दौ तद्धितान्तौ 'सप्तम्यास्त्रल्' (५-३-१०) इति। तयोः'तद्धितश्चा-
सर्वविभक्तिः' ( १-१-३८ ) इत्यव्ययसंज्ञा, 'कृत्तद्धितसमासाश्च' ( १-२-
४६ ) इति प्रातिपदिकसंज्ञा च। प्रातिपदिकत्वात् स्त्रीलिंगे 'अजाद्यष्टाप्'
( ४-१-४ ) इति टाप्प्राप्तः, 'ङ्याप्प्रातिपदिकात्' 'स्वौजसमौट्०' ( ४-१-
१२ )इति चस्वादयः। उभयोरनेन लुक्। सुपः-कृत्वा, हृत्वा। क्त्वान्तस्य

---

५—ऋ० १।११५।१। ६—ऋ० ८।७५।१२। ७—यजु० ३।४७। ८ ऋ० १।१२१।७।
९—ऐ० ब्रा० ७।१४।१५।




'क्त्वातोसुन्कसुनः' (१-१-४०) इत्यव्ययसंज्ञा तस्यैरेव च 'कृत्तद्धित०' इति प्रातिपदिकसंज्ञायां सत्यां समागतस्य सुप्रत्ययस्यानेन लुक्।

## नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः ( २-४ ८३ ) -८४

न। अव्ययीभावात्। अतः। अम्। तु। अपञ्चम्याः। न पञ्चमी अपञ्चमी, तस्याः (न० त०)। अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग् भवति, अमादेशस्तु तस्य भवत्यपञ्चम्याः। उपकुम्भं तिष्ठति, उपकुम्भं पश्य। उपमणिकं तिष्ठति, उपमणिकं पश्य। उपकुम्भोपमणिकशब्दौ 'अव्ययं विभक्तिसमीप०' (२-१-६) इत्यनेनाव्ययीभावसमासौ। तत्राऽव्ययीभावस्याव्ययसंज्ञायां सत्यां पूर्वयोगेन सुपो लुकि प्राप्तेऽमादेशार्थं वचनम्। 'अमि पूर्वः' (६-१-१०६) इति पूर्वरूपैकादेशः।

## तृतीयासप्तम्योर्बहुलम् ( २-४-८४ )

तृतीयासप्तम्योः। बहुलम्। तृतीया च सप्तमी च=तृतीयासप्तम्यौ-तयोः (इ० द्व०)। तृतीयासप्तम्योर्विभक्त्योर्बहुलमम्भावो भवत्यव्ययीभावात्। उपकुम्भेन कृतम्, उपकुम्भं कृतम्। उपकुम्भे निधेहि, उपकुम्भं निधेहि। पूर्वेण नित्यमम्भावः प्राप्तः स एव बहुलत्वं प्राप्यते। अमभावपक्षे तृतीयाया इनादेशः।

## लुटः प्रथमस्य डारौरसः ( २-४-८५ )

डाश्च रौश्च रश्च=डारौरसः (इ० द्व०)। 'अनद्यतने लुट्' (३-३-१५) इति धातोर्विधीयमानस्य लुट्प्रत्ययस्य परस्मैपदे आत्मनेपदे च प्रथमपुरुषे ये तिबाद्यादेशास्तेषां त्रयाणां त्रयाणां यथाक्रमं डारौरसआदेशा भवन्ति। परस्मैपदस्य-कर्त्ता, कर्त्तारौ, कर्त्तारः। आत्मनेपदस्य-अध्येता, अध्येतारौ, अध्येतारः। अनेकाल्त्वादिमे सर्वादेशाः। कृ+तास्+डा इत्यत्र 'टेः' (६-४-१४३) इत्यभस्यापि टेर्लोपः कृ+ तास् + रौः इत्यत्र

  

'रि च' ( ७-४-५१ ) इति सकारलोपः। आत्मनेपदे कृतेष्वादेशेषु टेरेत्वं न भवति ज्ञापकात्। 'थासः से' ( ३-४-८० ) इति, सेवचनं ज्ञापकम्-ये तिङादेशास्तेषां टेरेत्वं न भवतीति।

इत्यल्मोड़ाजनपदान्तर्गतपीगोलीग्रामाऽभिजनेनोप्रेतीत्युपाह्वेन
श्रीमत्कृष्णानन्दतनुजनुषाश्रीमत् तुलसीगर्भजेन कौशल्य-
गोत्रोत्पन्नेन व्याकरणदर्शनाचार्योपाध्युपहितेनश्रीमज्ज
यदत्तशर्मणा विरचितायां लघुकाशिकानाम्न्यामष्टा-
ध्यायीवृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः।
समाप्तश्चायं द्वितीयोऽध्यायः।

इति प्रथमो भागः



